# मालविकाग्निमित्रम्।



## नाटकम्।

महाकवि-कालिदास-प्रणीतम्।

गवर्णमेण्ट-संस्कृतपाठशालाख्याध्यापक-

**श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्य्येण**

कृतविषमपदव्याख्या-समलङ्कृतम्।

१९२७ संवत्सरे

मुद्रितम्।

# MALAVIKAGNIMITRA

## A DRAMA

BY

**KALIDASA**

EDITED WITH NOTES

BY

PANDIT TARANATHA TARKAVACHASPATI

PROFESSOR OF GRAMMAR, SANSKRIT COLLEGE.

Calcutta:

1870

*AGENTS*

*Pandit Jibananda Vidyasagara B. A*
*Sanskrit College, Calcutta.*

*Trubner & Co.*
*London.*

Professor Táránátha Tarkaváchaspati, in the midst of his philological labours, has responded to the call of many of his pupils and other Sanskrit-reading friends in issuing this present edition which is the first in India of the Málavikágnimitra of Kalidása being one of his three dramas that have come down to us. The Pandit has given notes on difficult passages and translation in Sanskrit of all the Prákrita passages in the text.

PRASANNAKUMÁRA SARVÁDHIKÁRÍ

PRINCIPAL OF THE SANSKRIT COLLEGE.

Calcutta,
Govt. Sanskrit College,
*July* 18, 1870.

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| केरेशण | केसरेण | ६ | १७ |
| असन्निहेति | असन्निहितेति | ७ | ११ |
| प्रसङ्गार्थः | प्रसङ्गार्थो | ७ | १२ |
| अम्बरो विशेषः | अग्निमित्रस्य भार्य्यान्तरम् | ११ | १८ |
| राजस्त | राजस्तु | १५ | ११ |
| विकथ्य | विकत्थत्र | १८ | ६ |
| पश्यति | न पश्यति | १८ | २० |
| परिपहादानं | परिपन्हस्थानं | १८ | २२ |
| सुतीर्थात् | सुतीर्थात् | २१ | १५ |
| सुन्दर | सुन्दर | २१ | १५ |
| √प्रत्यायथितव्यम् | प्रत्यायंयितव्यम् | २६ | २ |
| अक्षयत | भक्षयत | २८ | १२ |
| स्नालं | स्नानं | २८ | १८ |
| /मध्यामः | मध्याम √ | ३१ | १२ |
| पत्याः | दुहितृसपत्न्याः | ३१ | १७ |
| ये मम | मे मम | ३८ | १५ |
| मत् | मत् | ४० | १८ |
| शिचस्य | शिचकस्य | ४२ | १८ |
| अगमिनौ | आगमिनौ | ५० | १८ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| करत्वात् न | करत्वेन | ५४ | १२ |
| रुग्नस्य | रुग्णस्य | ५६ | २० |
| व्यापार | मृषाव्यापार | ५७ | १६ |
| बीच्यते | वीच्यते | ६२ | ६ |
| चरणा | चरण | ६४ | १० |
| स्फुरितस्य | स्फुरितमस्य | ६५ | १७ |
| भर्त्तुस्त्वा | भर्त्तुरस्या | ६८ | १२ |
| त्वरयस्य | त्वरयस्व | ६८ | २० |
| सुरभी | सुरभिः | ७२ | ११ |
| मिष्ठ | मिष्ट | ७२ | १४ |
| दुष्टत्वा | दुष्टत्वात् | ७२ | १५ |
| सभिसन्धाय | मभिसन्धाय | ७५ | २० |
| अगन्या | अनन्या | ८० | १२ |
| किमन्यजत् | किमन्यत् | ८० | १८ |
| प्रणयती | प्रणयवती | ८५ | १० |
| कययति | कथयति | ८८ | १२ |
| अलङ्कृतः | अमलङ्कृतः | ८८ | (१२) |
| नालङ्कृतामीति | नालङ्कृतासीति | ८८ | (१२) |
| योगच्चेमं | योगक्षेमं | ९४ | १८ |
| विषादाभ्यामत्र | विषादाभ्याम् (६) अत्र | १०० | १२ |
| नमो ते | नमस्ते | १०० | १८ |
| तदागमन | (६) तदागमन | १०० | २० |
| चेष्ठया | चेष्टया | १०४ | ६ |
| इदामीं | इदानीम् | १०६ | १२ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| प्रकाम्ये | प्राकाम्ये | १०८ | १२ |
| बर्धंत | वर्द्धते | १११ | १४ |
| स्टल्लासि | स्टल्लासि | ११४ | २० |
| तज्जन्यापराधः | तज्जन्यापराधं | ११४ | २१ |
| हट्ठैव | हट्ठैव | ११५ | १४ |
| पक्षवादित्वम् | पक्षपातित्वम् | ११६ | १४ |
| मोच्यावहै | मुच्यावहै | ११७ | ५ |
| दैव्यै | देव्यै √ | ११८ | १८ |
| विणवेहि | विसवेहि | १२१ | ६ |
| ऊर्जितामर्थ्यस्य | ऊर्ज्जितसामर्थ्यस्य | १२२ | १६ |
| रोधद्दचैः | रोधःस्यद्दचैः | १२२ | २१ |
| परिधास्त्र | परिघास्त्र | १२२ | २२ |
| अनेन तत्र | अनेन | १२३ | १४ |
| आहित | अभिहृत | १२३ | २१ |
| बर्हसि | वहसि | १२४ | १७ |
| भवती | करोती | १२५ | २० |
| पक्षो सूचितः | पक्षः सूचितः | १२७ | २२ |
| प्रतिबोधक | प्रतिरोधक | १२७ | २३ |
| बर्धतां | वर्द्धतां | १२८ | १६ |
| रोच्यते | रोचते | १३१ | १८ |
| यो स भर्त्ता | यः स भर्त्ता | १३२ | १३ |
| सविक्लवम् | सविक्लवम् √ | १३३ | ११ |
| पठ्ठ | पट्ठ | १३४ | ८ |
| प्रबल्ल | प्रवश | १३४ | १८ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| उपपुज्यते | उपयुज्यते | १२६ | २ |
| दारिको | दारको | १३८ | १ |
| वर्धंते | वर्द्धते | १४० | ११ |
| मेवीय | मेधीय | १४० | १८ |
| आदधाति | आदधाति स इति शेषः | १४१ | १८ |
| जन्य | जन्म | १४१ | १९ |
| विस्मवाधायक | विस्मयाधायक | २४१ | २१ |
| परिव्रत्तं | परिव्रजतुं | १४७ | ६ |

# विज्ञापनम् ।

इह खलु सकलेषु सुखसाधनेषु काव्यमेव परमसुखसाधनम् तद्धि मुहुर्मुहुरनुशीलितमपि मनागपि विरागभाजनतां नैव भजते बहुशोऽवेक्षितेऽपि न याति चापक्षीणताम् प्रत्युत आस्वाद्यमानं नवांनवां कामपि चमत्कारलहरीं चेतसि सचेतसां प्रतिक्षणमातनोति समुल्लासयति च सहृदयहृदयसद्मपद्मम् न चापेक्ष्यते तदास्वादनसम्पादने बहुलायासः ।

काव्यञ्च विलक्षणरचनोपनिबद्धितो विविधगुणभूषितो नानालङ्कारमण्डितो रसभावादिप्रधानो वाक्यविशेषः ।

तत्प्रणेतारश्च वाल्मीकिकालिदासादयः प्रथिताः । तत्र वाल्मीक्यादयः इतिवृत्तप्रधानं प्रसङ्गतोरसानुगुणं रामायणादिकं, कालिदासादयश्च विविधरसानुगुणं प्रसङ्गत इतिवृत्तोल्लेखं रघुवंशादिकं काव्यं रचयामासुः ।

तच्च काव्यं श्रव्यदृश्यभेदात् द्विविधम् । तत्र रामायणरघुवंशादिकं श्रव्यं, नागानन्दाभिज्ञानशकुन्तलादिकं नाटकापरपर्य्यायं रूपकपदाभिधेयं दृश्यं काव्यम् । तत्रापि दृश्यकाव्यमेव सहृदयानामतीव समादरास्पदं सर्व्वानुभवसिद्धम् । तत्र हि नटाभिनेयपदार्थान् वीक्षणेन वीक्ष्य तत्प्रयुक्त वाक्यानि च श्रवणेन श्रुत्वा एकदैव नयनश्रवणप्रीतिमुपलभ्य कामपि आनन्दसन्ततिं चेतसि सहृदयधुरीणा उररीकुर्व्वन्ति मज्जन्ति चामूलं रसार्णवलहरीषु ।

नाटकप्रणयनप्रकारज्ञापनाय च शिलालिना मुनिना पूर्वं नटसूत्राख्यः प्रबन्धो निरमायि इत्येतत् "पाराशर्य्यशिलालिभ्यां भिक्षुनटसूत्रयोः" इति, ४, ३, ११० पाणिनिसूत्रेणावगम्यते । भरतमुनिनापि तत्प्रतिपादकं सूत्र

पृथिव्यां तेनैव च अभिनयप्रकारादिकं शिक्षयता अप्सरोभिः सरस्वतीकृतं लक्ष्मीस्वयंवराख्यं नाटकमभिनायितमिति विक्रमोर्वश्यामवगम्यते तयोश्च ग्रन्थयोः पठनपाठनासमादरलोपेन प्रायेण लुप्तप्रायता जाता। ततः भोजदेवपितृव्यमुञ्जदेवसभासदेन धनिकनाम्ना पण्डितेन दशरूपकनामकं निबन्धो निर्ममे तत्र च नाटकलक्षणादीनि सम्यक्तया प्रतिपादितानि उदाहरणानि च तेन यथालाभं दर्शितानि। तत एव संक्षिप्य साहित्यदर्पणकृत षष्ठपरिच्छेदे सोदाहरणानि सम्यक्तया लक्षणानि दृब्धानि।

संस्कृतनाटकाभिनयप्रचारश्च अतिपुरातनकालादारभ्य आसीत्। तच्च महाभारते हरिवंशे प्रभावतीहरणवृत्तान्त एव स्फुटमवगम्यते। विक्रमादित्यभोजदेवकालपर्य्यन्तञ्च संस्कृतभाषायाः प्रचाराधिक्यात् संस्कृतनाटकाभिनयोऽपि तत्तत्काले प्रचुर आसीत्। अत एव तदानीन्तनकविभिः स्वस्वकाले स्वस्वनृपसंसदि अभिनयप्रदर्शनार्थानि तत्तन्नाटकानि रचितानि। क्रमशश्च कालात् संस्कृतभाषानैपुण्ये विलुप्ते, विलुप्ते च तत्समादरे संस्कृतनाटकाभिनयोऽपि लुलोप। इदानीन्तु गवर्णमेण्टसंस्कृतपाठशालास्थान्तेवासिभिः १८२६ मिते संवत्सरे वेणीसंहारनाटकाभिनयोऽकारि तत् पूर्वं अस्माभिर्न दृष्टपूर्व्वः संस्कृतनाटकाभिनयः।

इतःपूर्व्वं १८२७ सप्तविंशत्युत्तरोनविंशतिशततमवर्षे भारतवर्षे मालवदेशे उज्जयिनीनामराजधान्यामसीमगुणधाम विक्रमादित्यनामा नृपतिरासीत्। तस्य धन्वन्तरिप्रभृतयो नव कविवराः सभासदो बभूवुः। तेषु कालिदास एव प्रथितयशा महाकविरासीत्। तेन च रघुवंश-कुमारसम्भव-मेघदूताभिधं काव्यत्रयं, श्रुतिचन्द्रिकाभिध उत्कलदेशप्रचलितो वेदोक्तकर्म्मप्रतिपादकनिबन्धः, ज्योतिर्विदाभरणनामकं कालज्ञानशास्त्रं च क्रमेण निरमायि। अनन्तरञ्च मालविकाग्निमित्र-विक्रमोर्वशी-शाकुन्तलाभिधानि दृश्यकाव्यानि प्रणीतानि। एतञ्च तत्कृतज्योतिर्विदाभरणग्रन्थे शेषाध्याये स्पष्टमुपलभ्यते यथा,

मत्तोऽधुना कृतिरियं सति मालवेन्द्रे
श्रीविक्रमार्कनृपराजवरे समासीत् इति ।
धन्वन्तरिः क्षपणकोऽमरसिंहशङ्कु-
वेतालभट्टघटखर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥ इति

यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी इति ।

शङ्कादिपण्डितवराः कवयस्त्वनेके
ज्योतिर्विदः सममवंश्च वराहपूर्वाः ।
श्रीविक्रमस्य बुधसंसदि प्राज्यबुद्धे-
स्तैरप्यहं नयसखः किल कालिदासः ॥

काव्यत्रयं सुमतिकृद् रघुवंशपूर्वं
जातं यतो ननु कियच्छ्रुतिकर्मवादः ।
ज्योतिर्विदाभरणकालविधानशास्त्रं
श्रीकालिदासकवितो हि ततो बभूव इति

वर्षे सिन्धुरदर्शनाम्बरगुणैर्याते कलौ संमिते

मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रम इति च

अनेन ३०६८ अष्टषष्ट्युत्तरत्रिसहस्रसंख्यके कलेरब्दवृन्दे याते तद् ग्रन्थकरणं सुव्यक्तम् । इदानीं च कलेर्गताब्दाः ४९७० तेषु निर्दिष्ट ३०६८ संख्यायोमितेषु १९०२ वर्षाः समायान्ति । तेन इतः पूर्वं १९०२ वर्षगणात् पूर्वं कालिदासकवितो ज्योतिर्विदाभरणं ततः पूर्वं रघुवंशादिकमभूदिति प्रतिभाति । एतत्सन्दर्भैर्यद्यपि दृश्यकाव्यत्रयकरणं न प्रतीयते तथापि दृश्यकाव्यानां प्रागुक्तानां ज्योतिर्विदाभरणग्रन्थात् पश्चात्काले कालिदासकृततया न तेषां तत्र समुल्लेखः किन्तु तत्तद्ग्रन्थेष्वेव तत्कृतत्वं सुव्यक्तमेव । ऋतुसंहार-नलोदययोर्यदि तत्कालिदासकृतत्वं तदा ततःपराचीनतया न तत्रोल्लेखः ।

स्मृतिचन्
3068

दृश्यवरेषु च नाटकेषु कालिदासप्रणीतानि अभिज्ञानशकुन्तला-विक्रमोर्व्वशी-मालविकाग्निमित्राणि, भवभूतिप्रणीतानि उत्तररामचरित-मालतीमाधव-वीरचरितानि, धावकप्रणीते वसुलिप्सया श्रीहर्षराजकृततया प्रख्यापिते नागानन्द-रत्नावल्याख्ये, भट्टनारायणकृतं वेणीसंहाराख्यं विशाखदत्तकृतं मुद्राराक्षसञ्च इत्येतानि सर्व्वत्र उत्कृष्टानि। तन्मध्ये च अभिज्ञानशकुन्तलाख्यं शृङ्गाररसप्रधानं, करुणप्रधानम् उत्तररामचरितञ्च सर्व्वोत्कृष्टम्। कालिदासकवेः प्रसादगुणयुक्तशृङ्गाररसवर्णने यथा ख्यातिः एवं भवभूतेरपि गाढ़बन्धयुक्तकरुणवीरादिरसवर्णने सर्व्वत्र ख्यातिः। तावेव इमां भारतवर्षभूमिमुत्पद्य स्वस्वकृतकवित्वप्रख्यापनेन भूषयाम्बभूवतुः।

कालिदासस्य कतममन्वयं कतमञ्च जनपदमलञ्चकार तन्नाकलयामः। किन्तु तस्य चरितविषयेऽस्मद्देशे भूयिष्ठप्रचारमेवमैतिह्यमस्ति। तदत्र सर्व्वत्र विज्ञापनाय प्रदर्श्यते। काचित् विदुत्तमा कन्या विवाहार्थं पित्रानीतान् बहून् पात्रभूतान् द्विजान् वादविचारेण पराजिग्ये। एवम् आगत्यागत्य तस्याः सकाशात् विचारे पराजयमाप्त्वा प्रतिनिवृत्तेषु वरेषु तदुत्तरं पराजयभयेनेतरे वरा यदा नैवागन्तुमैच्छन् तदा तत्पित्रा विचाराभावेनैव आगतमात्राय पात्राय कन्या देयेति प्रतिज्ञाते पूर्वपूर्ववरानयने निष्फलप्रयत्नतया बहुधा खिन्ना जातेर्ष्या दूताः पुनर्वरानयनार्थं तत्पित्रा नोदिताः स्वावलम्बितशाखाच्छेदितया कालिदासमल्पबुद्धिमवेत्य तत्कन्यायावरत्वेन आनिन्युः। आनीताय च तस्मै अविचार्य्य तद्दोषगुणौ तत्पिता तां कन्यां प्रायच्छत्। एवं तस्य विवाहे संवृत्ते दम्पत्योः परस्परालापकाले कालिदासेनापभ्रंशशब्दमात्राभिज्ञेनापभ्रंशशब्दः प्रायोजि। तत् श्रुत्वा च तद्भार्य्या तमत्यन्तं तिरस्कृत्य गृहात् निष्काशयामास। एवं पत्न्या निष्काशितः कालिदासोऽतीव निर्वेदमापद्यारण्यं गत्वा सरस्वतीमाराध्य तत्प्रसादात् प्राप्तविद्यः गृहं प्रति निवृत्ते। आगत्य च रात्रौ गृहद्वारं रुद्धं विलोक्य तेन स्वपत्नीं प्रति "अनावृतकपाटं द्वारं देहीति" अभिहितम् तत् श्रुत्वा च स्वरविशेषेण तं पतिमवगत्य

कालिदासपत्न्याऽनुयुक्तम् "अस्ति कश्चित् वाग्विशेष इति" इत्येवं पत्न्या कृते वाग्विशेषास्तित्वप्रश्ने तद्वाक्यं पदत्रयघटितमिति कृत्वा तत्रस्थमेकैकं पदमधिकृत्य तेन एकैकं काव्यं विरचितम्। तत्र तद्वाक्यस्यम् अस्तीति प्रथमं पदमधिकृत्य "अस्त्युत्तरस्याम्" इत्यादि सप्तदशसर्गात्मकं कुमारसम्भवाख्यं महाकाव्यं, कश्चिदिति द्वितीयं पदमधिकृत्य "कश्चित् कान्ताविरहगुरुणा" इत्यादिकं मेघदूताख्यं खण्डं काव्यम्, वाग्विशेष इति तृतीयं पदं तदेकदेशं वागिति वाक्पदमधिकृत्य "वागर्थाविव संपृक्तौ" इत्यादिकमूनविंशतिसर्गात्मकं रघुवंशाख्यं महाकाव्यं च क्रमशो रचितम्। तद्रचनया च कालिदासः सर्वत्र प्रथितसुकवितया प्रख्यातिमुपलभ्य क्रमेण विक्रमादित्यनृपसभासदताम् आजगामेति।

उक्तेषु कालिदासकृतेषु नाटकेषु मध्ये इदमेकं नाटकमभिज्ञानशकुन्तलापेक्षया यद्यप्येतत् हीनं तथाप्यन्यापेक्षयास्य उत्कृष्टत्वमेव।

अत्र च नाटके पञ्च अङ्काः शृङ्गारो रसः अङ्गी, विदिशाधिपतिः अग्निमित्रनृपतिर्नायकः मालवदेशाधिपस्य माधवसेनस्य स्वसा मालविका नायिका, धारिणीनामिका राजमहिषी इरावती चापरा राजभार्य्या तस्याः प्रतिनायिका। अत्र संक्षेपत इतिवृत्तं तावदभिधीयते। माधवसेनाख्यो-मालवाधिपतिः स्वस्वसुर्वरत्वेन अग्निमित्रं स्थिरीकृत्य तद्विवाहं निष्पादयितुमागच्छन् तस्यैव पितृव्यपुत्रेण यज्ञसेनेन पथि अवरुध्य निगृह्य च कारागारे रुद्धः। अथ तादृशोपप्लवमुपलभ्य तस्य सचिवेन सुमतिना गूढं तद्भगिनीं मालविकामपवाह्य स्वभगिन्या कौशिक्या सह विदिशाभिगामिसार्थवाहसार्थमवलम्ब्य अग्निमित्राय तां प्रतिपादयितुं प्रतस्थे।

अथारण्ये निशि तैः सह सुप्तो दस्युभिराक्रम्य सार्थवाहसैन्यानि पराजित्य तां परीप्सुः युध्यमानो सुमतिर्व्यापादितः। तन्मरणे च प्राप्तमूर्च्छां कौशिकीं मृततया निश्चित्य मालविकामर्थसंघातांश्च दस्यवोऽपहृत्य अग्निमित्रदुर्गपालाय तस्यैव श्यालकाय वीरसेनाय उपढौकन-

त्वेन तां प्रायच्छन्। वीरसेनोऽपि तां दारिकां शिल्पादिकर्मनिपुणामवेत्य स्वभगिन्यै धारिण्यै अग्निमित्रमहिष्यै उपायनत्वेन प्रैषयत्। धारिणी च तां शिल्पादिकलासु निपुणामवगम्य गणदासस्य नाम्नाचार्यस्य समीपे छलिक-नामनाटकाभिनयशिक्षायै न्ययोजयत्। अत्रान्तरे कौशिकी दस्यूनामप-सरणानन्तरं प्रबुध्य विपन्नेन भ्रात्रा, अपहृतया मालविकया च वियुज्य किंकर्तव्यमितिकर्तव्यतामूढतामापेदे। अथ तथाभूतमुपप्लवमनुभूय संसा-रात् परं निर्वेदमापद्य च क्रमेण नियतिनियोगात् विदिशानगरीमागत्य कौशिकी प्रव्रज्यां जग्राह। धृतप्रव्रज्यया च तया भवितव्यतावशात् धारिण्या सह मैत्रीमासाद्य तस्याः पीठमर्दितामालेभे। तत्र च चिरपरि-चितामपि मालविकां तथाभूतां वीक्ष्याभिज्ञायापि कारणान्तरवशात् राज्ञी-समीपे माधवसेनभगिनीयमिति न प्रकाशयामास।

एकदा च चित्रपटे राज्ञीपरिचारिकामध्ये लिखितप्रतिमूर्तिं मालविकां विलोक्य नरपतिः तत्सौन्दर्य्यदर्शनेन अतीव चमत्कारितामापद्य च कस्या इयं प्रतिमूर्तिरिति धारिणीमन्वयुङ्क्त। धारिणी च तां निगूहितुं कथान्तर-प्रसङ्गिराहता। अतिसौन्दर्य्यवतीयं कदाचित् राज्ञा दृश्येत तदाऽनुरज्ये-तास्यामिति आशङ्कया राज्ञ्या तथा निगुह्यमानां तां राजा निर्बन्धातिशयेन देवीं पुनः पुनः केयं केयमित्यपृच्छत्। बालस्वभावा च तत्कुमारी वसुलक्ष्मीः राज्ञ्या निगूह्यमानामपि तां दारिकां मालविकेत्यभिदधे।

राजा तु तत्प्रतिमूर्तिदर्शनेन मुग्धहृदयतया तां साक्षात् द्रष्टुमिच्छन् वयस्येन गौतमेन विदूषकेण समं रहसि समन्त्रयत्। विदूषकस्तु तदुपाय-त्वेन नाटकाभिनयदर्शनच्छलेन तां दर्शयितुं कौशिक्या सह गूढं परामृश्य हरदत्तगणदासयोः नैपुण्यविषये अन्योन्यस्पर्द्धामुत्पाद्य कलहं कारयित्वा राजसमीपं तौ निर्णयार्थमागमयामास। राज्ञा च गणदासस्य देवीपरि-ग्रहतया, हरदत्तस्य चात्मपक्षतया देवीसमीपे एव तन्निर्णयस्य युक्ततायाः प्रतिपादने राजादेशेन कौशिक्या सह देव्या तत्रागतम्। अथ राज्ञा तयो-

विशेषनिर्णयाय नियुक्तया विदूषकेण प्राक् सम्भावितया कौशिक्या स्वशिष्य-प्रयोगदर्शनादेव तयोः नैपुण्यविशेषनिर्णयो भविष्यतीत्यभिहिते "पात्रप्रवेशः रूपान्तरपरिग्रहं विनैवेत्यभिहिते च गणदासेन स्वशिष्यां मालविकां वेशान्तरमग्राहयित्वैव रङ्गभूमौ प्रवेश्य तन्मुखेन चतुष्पदोपेतं शर्मिष्ठया कृतं छलिकनाठकस्यमेकं पद्यं राजानं श्रावयामास। तस्य पद्यस्य च दम्पत्योः पूर्वरागाभिव्यञ्जकतया मालविका तत्पाठव्याजेन, चेष्टाविशेषेण च आत्मनोऽनुरागं राज्ञे न्यवेदयत्। राजा तु अतीव सौन्दर्य्यशालिनीं तामालोक्य तदैव तां चकमे इत्येवम ऽन्योन्यस्मिन् अन्योन्यरागे आविर्भूते तदनन्तरं तयोः क्रमेण स्मरदशा आविर्बभूव।

अथ नृपतिस्तामुपलब्धुं विदूषकेण सह रहसि मन्त्रयामास। विदूषकस्य तत्प्रार्थनां मालविकासखीं बकुलावलिकां श्रावयित्वा यथा राज्ञा सह मालविकाया मेलनं भवेत्तदुपायं चिन्तयामास। अत्रान्तरे प्रमदवनस्थितं पीतवर्णाशोकं चिरेणाकुसुमायमानमुपलभ्य तदुद्यानपालिका वराङ्गनायाः सनुपूरपादताड़नरूपदोहदार्थं धारिण्यै न्यवेदयत्। धारिणी च तदा स्वयं पादयोरुग्णतया मालविकामेवान्तःपुरमध्ये वराङ्गनां मत्वा पीताशोकदोहदनिष्पादनाय न्ययोजयत् अङ्गीचकार च पञ्चरात्राभ्यन्तरे अशोकपुष्पोद्गमे तत्राभीष्टं दास्यामीति। एवं राज्ञ्या नियुक्ता मालविका स्वसख्या बकुलावलिकया सह प्रमदवनं गत्वा पीताशोकस्य सनुपूरपादताड़नरूपं दोहदं विदधे। अत्रैव समये बकुलावलिका निर्जने राज्ञः प्रार्थनां तस्यै न्यवेदयत्। भवितव्यतावशाच्च राजापि तस्मिन् समय एव तत्राससाद। अथ राज्ञापि स्वप्रार्थनं स्वमुखेनैव तदानीं मालविकायै श्रावितम्। अत्रान्तरे अन्या इरावतीनाम्नी राजभार्य्या तत्रोपतस्थे आकर्णयामास च राज्ञस्तस्यामनुरागसूचकं तद्वाक्यम्। तत् श्रुत्वा च सा राज्ञे भृशं कुकोप। अथ राज्ञा प्रसाद्यमानापि सा तं विहाय ततः प्रतस्थे। ततः सा देवीं धारिणीमुपगम्य सर्वं वृत्तान्तमावेदयत्। देव्या च बकुलावलिकया सह

मालविकां निगडेन बद्धा तदधिकृतमाधविकां प्रत्युपदिष्टं मदादेशसूचकाभिज्ञानदर्शनमन्तरेण नैते मोचनीये इति ।

एतद्वृत्तान्तमवगत्य राजातीव खेदमापेदे । अथ विदूषकः तदुद्धाराय आत्मनो हस्ते केतककण्टकेन छेदं कृत्वा सर्पदंशनत्वेनापदिश्य च राजराज्ञ्याः समीपे विषवेगं प्रकाशयामास । राजा च ध्रुवसिद्धिं तद्विषापनोदनाय न्ययोजयत् । तदपहाराय नियोजितो ध्रुवसिद्धिर्नागविषापहारकमणिमन्विष्येष । देव्या च स्वाङ्गुरीयस्थ-सर्पविषापहारकमणिः तस्मै प्रेरितः । तमधिगत्य कृत्रिमविषवेगं परिमुच्य च विदूषकः मालविकामोचनार्थं माधविकामुपगम्य अवोचत् । राज्ञो जन्मनक्षत्रं दुष्टग्रहाभिभूतमित्यतस्तदुपशमाय सर्वबन्धमोक्षो विधेय इति ज्योतिर्विद्भिरुपदिष्टे इरावतीचित्तं रञ्जन्त्या देव्या अभिज्ञानरूपमिदमङ्गुरीयकं दत्त्वाऽहं न्ययोजि । इत्थं कूटमभिलप्य बन्धात्ते मोचयामास । ततो निभृतं प्रमदवनं नीत्वा राज्ञा समं मालविकां मेलयामास । पुनरपि तन्मेलनसमये इरावती तत्र समुपतस्थे तथाभूतं तयोर्दिवासङ्केतस्थाने सङ्गं विलोक्य राजानं प्रति पुनरभिचुक्रोध । अस्मिन्नेवान्तरे पीताशोकस्य पुष्पोद्गमोजातः । तद्वृत्तान्तमुद्यानपालिका मधुकरिका देव्यै न्यवेदयत् । राज्ञ्या तु पूर्वप्रतिज्ञातवस्तुप्रतिपादनाय कौशिक्या मालविकां भूषयित्वा तामादाय राज्ञे प्रतिपादयितुं प्रमदवनमाजग्मे । तदानीञ्च राज्ञीभ्रात्रा वीरसेनेन अश्वमेधेन यियक्षुणा मुक्ताश्वरक्षायै नियुक्तं राजपुत्रं वसुसेनं सर्वत्र विजयिनमुपश्रुत्य सर्वेषां हर्षप्रकर्षो जातः । तदानीमेव माधवसेनमोचनाय प्राग्नियोजितवीरसेनप्रभृतिभिः यज्ञसेनं जित्वा माधवसेनमोचनवृत्तान्तावेदनाय माधवसेनान्तःपुरस्थदारिकाद्वयेन सह दूतस्यागमनम् । ताभ्याञ्च दारिकाभ्यां मालविकां कौशिकीं च दृष्ट्वा प्रत्यभिज्ञाय च राजसमीपे तत्परिचयो दत्तः । कौशिक्या च आमूलं सर्ववृत्तान्तमुक्त्वा एतावत्कालपर्य्यन्तमात्मना निगूहनकारणमपि अभिदधे । अथ देव्यैव प्राक्प्रतिज्ञानुसारेण कौशिकीमनुज्ञाप्य राज्ञे तां प्रायच्छत् । राजा तु प्राक्

गान्धर्वविधिना प्रतिगृहीतामपि तां राज्ञीसम्मानार्थं तदैव प्रतिग्रह इति प्रकाशयामास इत्येवं मालविकया माधवसेनेन पूर्वं प्रतिश्रुताया अपि राज्ञा सह मेलनम्।

एतच्च रत्नावल्यां वर्णितं सागरिकया सह वत्सराजसमागमवृत्तान्त-मनुहरति तस्य नाटकस्य धनप्रत्याशया कविना श्रीहर्षकृततया ख्यापितत्वे-ऽपि धावककृतत्वं धावकस्य च एतस्मात् कवेः पूर्वकालिकत्वं ग्रन्थकृतैव स्वयं प्रस्तावनाप्रसङ्गेऽभिहितम् इत्यतस्तद्वृत्तान्तमनुहृत्यैतद् ग्रन्थकारेण निर-मायीति प्रतिभाति ।

एतत् पुस्तकञ्च भारतवर्षे कदापि मुद्रितं नासीत्। प्रथममेव मयास्य प्रचारणे यत्नोऽकारि । अस्य च परिशोधनविषये पाठशालास्थविभिन्नदेशीयं नागराक्षरवङ्गाक्षरलिखितं पुस्तकद्वयं जरमेणदेशस्थेन मुद्रितपुस्तकं च मूलम् । तेषु पुस्तकेष्वेव तावत्पाठावलोकनेन बहुसंवादिपाठादिग्रहणेनैव मुद्रितम् । यत्र च उभयविधपाठः बहुपुस्तकपाठसंवादो तत्रोभयविधोऽपि पाठः मुद्रितः चिह्नविशेषेण च तत्र तत्र एकस्य प्राह्यता अपरस्य काचित्कता सूचिता। अत्र विषमपदं व्याख्यातम् व्याख्यातञ्च प्राकृतभाषावाक्यं संस्कृतभाषा-वाक्येन ।

इतःपूर्वं वेणीसंहारनाटकविवरणे नाटकमुखप्रतिमुखवीजसन्धिरूपा-द्यङ्गसमुद्भावनं मया कृतं तत्र च इदानीन्तनानामादरातिशयाभावदर्शनेन एतन्नाटकविवरणसमये विस्तरेण तदुद्भावनं विनैव विषमपदव्याख्यानमात्रे प्रायासि ।

यावता परिश्रमेणास्य परिशुद्धिर्भवेत् तावान् परिश्रमोऽस्य शोधने मयाकारि तथापि यदत्र क्वचित् क्वचित् मम परिस्खलनं तस्य विशुद्धि-र्विद्वद्भिर्विधेयेति ।

संवत् १९२७ ।
गवर्णमेण्टसंस्कृतविद्यालयः ।

श्रीतारानाथतर्कवाचस्पतेः ।

# मालविकाग्निमित्रम्।



एकैश्वर्य्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद् यतीनाम्।
अष्टाभिर्यस्य कृत्स्नं (१) जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः॥१॥

---

प्रणम्य परमात्मानं श्रीतारानाथशर्मणा।
विव्रियते मालविकाग्निमित्रं नाम नाटकम्॥

(१) प्रणतानां भक्तानां बहूनि स्वर्गापवर्गादीनि फलानि यतः तादृशे एकैश्वर्य्ये परमेश्वरत्वे स्थितस्तद्विशिष्टोऽपीत्यर्थः। क्वचित् प्रणतबहुफल इति पाठः, स च उक्तार्थक एव। यः, स्वयं स्वरूपतः कृत्तिवासाः द्वीपिचर्माम्बरः तेनाकिञ्चन इत्यर्थः। तथा च परमैश्वर्य्याकिञ्चनत्वयोरेकत्र समावेशात् विरोधाभासः, ईश्वरे सर्वसमावेशसम्भवात् तत्परिहारः एवमुत्तरत्राप्यूह्यम्। कान्तया प्रियया गौर्य्या संमिश्रः संयुक्तः देहो यस्य तादृशः अर्द्धाङ्गीकृतनारीदेहः कान्तासंश्लिष्टदेहश्च, सन्नपि अविषयमनसां न विषयेषु शब्दादिषु मनो येषां विषयानासक्तचित्तानां यतीनां जितेन्द्रियाणां योगिनां संन्यासिनां वा परस्तात् परः प्रथमार्थे अस्तातिः। श्रेष्ठः, अष्टाभिः पृथिवी-जल-तेजो-वायु-गगन-यजमान-सूर्य्य-चन्द्र-रूपाभिस्तनुभिर्मूर्तिभिः कृत्स्नं सर्वं जगत् बिभ्रतो धारयतः पोषयतश्च यस्य नाभिमानः; स ईशः

[ नान्द्यन्ते । ]

सूत्रधारः (१) । अलमतिविस्तरेण नेपथ्याभिमुखमवलोक्य । मारिष ! (२) इतस्तावत् ।

प्रविश्य । पारिपार्श्विकः (३) । भाव ! (४) अयमस्मि ।

सूत्र । अभिहितोऽस्मि, परिषदा श्रीकालिदासग्रथितवस्तु मालविकाग्निमित्रं नाम नाटकमस्मिन् वसन्तोत्सवे प्रयोक्तव्य(५)-मिति, तदारभ्यतां सङ्गीतकम् ।

---

शिवः वो युष्माकं सन्मार्गालोकनाय सन्मार्गस्य मोक्षाद्युपायस्य सत्पथस्य च आलोकनाय दर्शनाय तामसीमज्ञानात्मिकाम् अन्धकारप्रचुराञ्च वृत्तिम् चित्तपरिणामभेदं व्यवहारञ्च व्यपनयतु । अस्य न नान्दीरूपता "पदैर्द्वा-दशभिर्युक्ता अष्टाभिर्वा भवेदुत" इत्युक्तस्य नान्द्याः लक्षणस्यात्राभावात् । किन्तु कविकृत-मङ्गलाचरणरूपत्वमेवेति बोध्यम् ।

(१) "सूत्रं धारयते यस्तु सूत्रधारः स उच्यते" इत्युक्तलक्षणः प्रधाननटः सूत्रधारो वदतीति शेषः । वाक्यमेव कर्म एवमुत्तरत्रापि नान्द्यन्ते इति क्वाचित्कः पाठस्तु प्रामादिकः उक्तपद्यस्य नान्दीरूपत्वा-भावस्योक्तत्वात् ।

(२) मारिष ! आर्य !

(३) सूत्रधारात् किञ्चिदूनगुणको नटः पारिपार्श्विकः ।

(४) भाव ! विद्वन् !

(५) कालिदासेन कविना ग्रथितं संदृब्धं वस्तु अभिनेयपदार्थजातं यत्र तत् । मालविकासहितोऽग्निमित्रः शाकपार्थिवादित्वात् समासः । तमधिकृत्य कृतो ग्रन्थः अण् द्वन्द्वसमासत्वे किरातार्जुनीयवत् छप्रत्ययः स्यात् । "नाटकं ख्यातवृत्तं स्यात्" इत्याद्युक्तलक्षणं दृश्यकाव्यं तल्लक्षणं च

पारिपार्श्विकः । मा तावत् । प्रथितयशसां धावक-(१)सौमिल्ल-कविपुत्रादीनां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कालिदासस्य कृतौ किं कृतो बहुमानः ।

सूत्र । अयि विवेक-(२)विश्रान्त-[शून्य]मभिहितम् । पश्य

पुराणमित्येव न साधु सर्वं
न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते
मूढः परप्रत्ययनेयबुद्धिः ॥ (३)

---

साहित्यदर्पणे षष्ठपरिच्छेदे द्रष्टव्यम् । प्रयोक्तव्यमभिनेतव्यम् अभिनयश्च यद्यपि तत्रत्यपात्राणामेव, तथापि तदुपलक्षितग्रन्थस्यापि स उपचर्य्यते ।

(१) धावकः नागानन्दरत्नावल्यादिग्रन्थकारकः । स च स्वप्रणीतमपि ग्रन्थं धनलिप्सया श्रीहर्षनाम्ना प्रख्यापितवानिति मम्मटभट्टस्य सम्मतम् । केचित् तु अन्य एव धावक इति कल्पयन्ति । प्रबन्धान् नागानन्दादीन् उल्लङ्घ्य अतिक्रम्य अनादृत्येति यावत् । वर्त्तमानकवेः नव्यकवेः बहुमानः समादरः किं कथं कृतः परिषदेति शेषः । क्वचित् बहुमानः परिषद इत्येव पाठः । तत्र परिषद इति कर्त्तरि षष्ठी । तत्प्रबन्धानामनतिक्रमणीयतां विवक्षन् तान् विशिनष्टि प्रथितयशसामिति विख्यातकीर्त्तीनामित्यर्थः । पृथुलयशसामिति पाठे विस्तीर्णकीर्त्तीनामित्यर्थः ।

(२) पारिपार्श्विकेनैवमाक्षिप्ते सूत्रधारस्तत्परिहर्त्तुमाह, विवेकेति । विवेको विश्रान्तो निवृत्तो यस्मात् निष्ठान्तस्य परनिपातः । विवेकशून्य-मिति पाठस्तु सुगमः समीचीनश्च ।

(३) विवेकशून्यत्वेनाक्षेपोऽत्र परिहृतस्तदेव कुत इत्यत्र गौरवागौरवे

पारि । आर्य्यमिश्राः (१) प्रमाणम् ।

सूत्र । तेन हि त्वरतां भवान् ।

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्त्
देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम् ॥ (२

इति निष्क्रान्तौ ।

प्रस्तावना । (३)

---

गुणदोषौ तत्त्वे इति प्रतिपादयन् प्रकृतकाव्यस्य गुणवत्त्वात् ग भाजनतेत्याह, पुराणमित्यादि । साधु सगुणं निर्द्दोषम् अवद्यम् दु सन्तः प्रेक्षावन्तः सदसद्विवेकिन इति यावत् । परीक्ष्य-गुणदोष शेषः पर्य्यालोच्य, अन्यतरत् पुराणं नवं वा, यत् सदोषं तत् प सगुणं भजन्ते । मूढः सदसद्विवेकशून्यः । तुकारो गम्यः । परस्य इ प्रत्ययेन विश्वासेन तच्छ्रद्धादर्शनेनेति यावत् । नेया तदनुसारेण बुद्धिर्येन तादृशः । तथा च प्रेक्षावताम् गुणदोषावेव गौरवागौरवयो न नव्यप्राचीनत्वे इत्यतोऽत्र ग्रन्थे बहुगुणवत्त्वात् प्रेक्षावतां प्र स्यात् न तु नव्यत्वेनानादर इति भावः ।

(१) आर्य्यमिश्रा आर्य्यश्रेष्ठाः सदसद्विवेकित्वेनैव तेषां स प्रमाणं सदसद्विवेचनाय प्रमातार इत्यर्थः ।

(२) एवं परिषदः प्रसाद्याभिनयार्थं तदाज्ञां जिघृक्षुः प्रकृ प्रवेशनाय कथां प्रस्तौति शिरसेति । अनन्तरमेव रङ्गभूमौ प्रवेक्ष्यन्तं परिजनम् अङ्गुल्या निर्दिशन्नाह, अयमिति । धारिणी च अग्निमि महिषी तस्याः परिजनः परिचारकलोकः ।

(३) "नटो विदूषको वापि" इत्युक्तलक्षणमामुखम् साहि० ६ प

ततः प्रविशति बकुलावलिका ।

बकुला । आणत्तम्हि देवीए धारिणीए अचिरोवणीदा छलिअणामधाट्टअअन्तरे [ उवदेसग्गहणे अ० ] कीरिसी, मालविए त्ति णट्टाआरिअं अज्जगणदासं पुच्छिदुं ता जाव सङ्गीदसालं गच्छम्हि । (१) इति परिक्रामति ।

ततः प्रविशत्याभरणहस्ता द्वितीया चेटी ।

प्रथमा । द्वितीयां दृष्ट्वा । हला कोमुदिए ! कुदो दाणीं इअं दे धीरदा जं समीए वि अदिक्कमन्ती इदो दिट्ठिं ण देसि । (२)

द्वितीया । अम्मो बउलावलिआ । सहि ! देवीए इदं सिप्पि-

---

(१) आज्ञप्ताऽस्मि देव्या धारिण्या, अचिरोपनीता छलिकनामनाट्यान्तरे ( उपदेशग्रहणे च० ) कीदृशी मालविकेति नाट्याचार्यं गणदासं प्रष्टुम्, तद्यावत् सङ्गीतशालां गच्छामि । स० इयपर्व्वदुहितः शर्म्मिष्ठायाः कृतिश्चतुर्भिः पदैः समन्वितं छलिकं नाम नाटकं तत्रान्तरे अचिरमुपनीता उपदेशग्रहणार्थं कृतनियमा कीदृशी प्रकृताभिनयशिक्षाग्रहणे इति शेषः । कीदृगवस्थेत्यर्थः । क्वचिदुपदेशग्रहणे इत्यधिकः पाठः । कीदृशम् उपदेशं गृह्णातीति जिज्ञासार्थं नाट्याचार्य्यसमीपे सखीप्रेषणमिति द्रष्टव्यम् ।

(२) प्रथमा । हला कौमुदिके ! कुतस्ते इयं धीरता यत्समीपेऽप्यतिक्रामन्ती इतो दृष्टिं न ददासि । स० प्रथमा प्रथमं प्रविष्टा बकुलावलिका । द्वितीयां तत्परं प्रविष्टां कौमुदिकाम् । धीरता धैर्य्यमचाञ्चल्यं प्रकृतविषयमुपेक्ष्य विषयान्तरेऽनासक्ततेत्यर्थः ।

सआसादो आणीदं णागमुद्दासणाहं अङ्गुलीअअं सिणिद्धं णिभालअन्ती तुह उवालम्भे पडिदम्हि। (१).

प्रथ। विलोक्य। ठाणे सज्जदि दे दिट्ठी। इमिणा अङ्गुलीअएण उब्भिण्णकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो। (२)

द्विती। हला कहिं पत्थिदासि। (३)

प्रथ। देवीए वअणेण णाट्टाआरिअं अज्जगणदासं पुच्छिदुं उवदेसग्गहणे कीरिसी मालविएत्ति। (४)

द्विती। सहि! ईरिसेण वावारेण असण्णिहिदावि सा भट्टिणा कहं दिट्ठा। (५)

---

(१) द्वितीया। अयि बकुलावलिके। सखि! देव्या इदं शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निभालयन्ती तवोपालम्भे पतितास्मि स०। आकर्णिकदर्शने हर्षातिशयद्योतकम् अयि इत्यव्ययम्। नागमुद्रया नागविकारकमणिखचितया मुद्रया नामाङ्कनयोग्यत्वभेदेन सनाथं युक्तम्। अनेनैव विषहारकमणिना विदूषकस्य अहिविषविनाशप्रकारो भविष्यतीति चतुर्थेऽङ्के व्यक्तीभविष्यति।

(२) प्रथमा। स्थाने सज्जति ते दृष्टिः अनेनाङ्गुलीयकेनोद्भिन्नकिरण- ण (केसरेण)कुसुमित इव तेऽग्रहस्तः। स०। अग्रं हस्तस्य हस्ताग्रमित्यर्थः।

(३) द्वितीया। हला कुत्र प्रस्थितासि स०। हलेति सखीसम्बोधनम्।

(४) प्रथमा। देव्या वचनेन नाट्याचार्यमार्यगणदासं प्रष्टुम् उपदेशग्रहणे कीदृशी मालविकेति। स०

(५) द्वितीया। सखि! ईदृशेन व्यापारेणासन्निहितापि सा भर्त्रा कथं दृष्टा स०। ईदृशेन अभिनयशिक्षणव्यापारेण कर्मणा तदभ्यासाय अन्यता-

प्रथ। अां। सो जणो देवीए पासगदो चित्ते दिट्ठो। (१)

द्विती। कहं विश्र। (२)

प्रथ। सुणाहि। चित्तसालं गदा देवी जदा पच्चग्गवण्ण-राअं चित्तलेहं आआरिअस्स पलोअन्ती चिट्ठदि। तहिं अन्तरे भट्टा उवट्टिदो। (३)

द्विती। तदो तदो। (४)

प्रथ। उवआराणन्तरं एक्कासणोवविट्ठेण भट्टिणा चित्त-गदाए देवीए परिअणमज्झगदं आसण्णपरिआरिअं पेक्खिअ देवी पुच्छिदा। (५)

वस्थितेरावश्यकत्वात् न तस्याः तत्र सन्निधिसम्भव इतत्राह असन्निहेति देव्याः अन्तःपुरस्य वेतत्र्थः। कथं भर्त्ता दृष्टेत्युक्तिः प्रकृतकथाप्रसङ्गार्था। अनेन च कथोद्घातेन तस्याः भर्तुश्च प्रवेशो भविष्यतीति प्राक् सूचितम् "असूचितस्य प्रवेशो नास्ति" इति नाटकसम्प्रदायात् तत्सूचनम्।

(१) प्रथमा। आं। स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः।

(२) द्वितीया। कथमिव।

(३) प्रथमा। शृणु।। चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखामाचार्य्यस्यावलोकयन्ती तिष्ठति। तस्मिन्नन्तरे भर्त्तोपस्थितः। प्रत्यग्रः अभिनवः वर्णस्य रागो रञ्जनं यत्र चित्रलेखायां तादृशीम्।

(४) द्वितीया। ततस्ततः।

(५) प्रथमा। उपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नपरिचारिकां दृष्ट्वा देवी पृष्टा।

द्विती । किं त्ति । (१)

प्रथ । अपुव्वा इअं दारिआ देवीए आसण्णा लिहिदा किंणामहेए त्ति । (२)

द्विती । आकिदिविसेसे आअरो पदं करेदि । तदो तदो । (३)

प्रथ । तदो अवहीरिअवअणो भट्टा सङ्किदो देवीं पुणोवि अणुबन्धिदुं पउत्तो । तदो कुमारीए वसुलच्छीए आअक्खिदं अज्ज एसा मालविए त्ति । (४)

---

(१) द्वितीया । किमिति ।

(२) प्रथमा । अपूर्वेयं दारिका देव्या आसन्ना लिखिता किंनामधेयेति ।

(३) द्वितीया । आकृतिविशेषे आदरः पदं करोति । ततस्ततः । आदरो गौरवम् आकृतिविशेषे विशिष्टाकृतौ पदं स्थानं करोति विशिष्टाकृतिदर्शनायादरो भवतीत्यर्थः ।

(४) प्रथमा । ततोऽवधीरितवचनो भर्ता शङ्कितो देवीं पुनरप्यनुबन्धुं प्रवृत्तः । ततः कुमार्य्या वसुलक्ष्म्याख्यातम् । आर्य्ये ! एषा मालविकेति । अवधीरितं देव्या प्रत्युत्तरादानेन अवज्ञातं वचनं यस्य अतएव शङ्कितः शङ्का मद्वचनश्रवणेऽपि कथं नोत्तरं दत्तमित्यत्र केनचित् कारणेन भवितव्यं न वेत्याकारकः संशयो जाता यस्य तारकादित्वात् इतच् । निर्बन्धुमाग्रहातिशयेन पुनः पुनः प्रष्टुमित्यर्थः । कुमार्य्येत्युक्तिः देव्यारहस्योद्भेदने विवेकशून्यताद्योतनार्था तच्च उत्तरवाक्ये स्पष्टं दर्शयिष्यति ।

द्विती । सस्मितम् । सरिसं क्खु एदं बालभाअस्स । तदो अवरं कहेहि । (१)

प्रथ । किं अण्णं । संपदं मालविआ सविसेसं भट्टिणो दंसण-पहादो रक्खीअदि । (२)

द्विती । हला अणुचिट्ठ अत्तणो णिओअं । अहं पि एदं अङ्गुलीअअं देवीए उवणइस्सं । (३) इति निष्क्रान्ता ।

प्रथ । परिक्रम्यावलोक्य च । एसो णट्टाआरिओ सङ्गीदसालादो णिग्गच्छदि । दाव से अत्ताणं दंसेमि । (४) इति परिक्रामति ।

प्रविश्य ।

गणदासः । कामं खलु सर्वस्यापि कुलविद्या बहुमता न पुनरस्माकं नाट्यं प्रति मिथ्या गौरवम् । कुतः । तथा हि

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा ।

---

(१) द्वितीया । सदृशं खलु एतद् बालभावस्य । ततोऽपरं कथय ।

(२) प्रथमा । किमन्यत् । साम्प्रतं मालविका सविशेषं भर्तुर्दर्शनपथात् रक्ष्यते ।

(३) द्वितीया । हला अनुतिष्ठात्मनो नियोगम् । अहमप्येतदङ्गुलीयकं देव्यै उपनेष्यामि ।

(४) प्रथमा । एष नाट्याचार्यः संगीतशालातो निर्गच्छति तावदस्या-त्मानं दर्शयामि ।

त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
　　नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्॥ (१)

बकुला। उपेत्य। अज्ज! वन्दामि। (२)

गण। भद्रे! चिरं जीव।

बकुला। अज्जं देवी पुच्छदि। अवि उवदेसग्गहणे ण अदिकिलिस्सदि वो सिस्सा मालविएत्ति। (३)

गण। भद्रे! विज्ञाप्यतां देवी परमनिपुणा मेधाविनी चेति किं बहुना।

---

(१) मुनयः इदं नाट्यं देवानां कान्तम् अभीष्टं सुन्दरञ्च चाक्षुषं चाक्षुषा ग्राह्यं चक्षुःप्रीतिकरं च तेन वास्तविकयज्ञादस्य विशेषः। क्रतुं यज्ञं सङ्कल्पञ्च आमनन्ति कथयन्ति एतद्दर्शने चक्षुषःप्रीतिकरी देवानामभीष्टयज्ञसङ्कल्पयोः प्राप्तिरित्यर्थः। उमया गौर्य्या कृतो व्यतिकरः सम्बन्धो यस्य तादृशे स्वाङ्गे हरगौरीरूप देहे इदं नाट्यं नर्त्तनादि द्विधा विभक्तम् स्त्रीपुंसयोर्न्टत्ययोर्भेदात् हररूपार्द्धाङ्गेन पुनर्त्तनं गौरीरूपार्द्धाङ्गेन च स्त्रीनर्त्तनं कृतमित्यर्थः। त्रयो गुणाः सत्वादयस्त्रिगुणाः ततः स्वार्थेष्यञ्। त्रैगुण्यं तस्मादुद्भवमपि लोकानां चरितमत्र नाट्ये नानारसं नवरसं तथा च त्रैगुण्योद्भवस्य नवरसकरत्वमाश्चर्य्यायेति भावः। यतो नानारसं ततः एकमपि नाट्यं बहुधा भिन्नरुचेः अनेकधा विभक्ताशयस्य जनस्य लोकस्य श्रेष्ठं समाराधनं सन्तोषहेतुसेवनमित्यर्थः।

(२) बकुलावलिका। आर्य्य! वन्दे।

(३) बकुलावलिका। आर्य्यं देवी पृच्छति, अप्युपदेशग्रहणे नातिक्लिश्यति वः शिष्या मालविकेति।

यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै ।
तत्तद्विशेषकरणात् प्रत्युपदिशतीव मे बाला ॥ (१)

वकुला । आत्मगतम् । अदिक्कमन्तीं विअ दूरावदीं पेक्खामि । प्रकाशम् । किदत्था दाणिं वो सिस्सा जस्सिं गुरुअणो एव्वं तुस्सदि । (२)

गण । भद्रे ! तद्विधानामसुलभत्वात् पृच्छामि । कुतो देव्या तत्पात्रमानीतम् ।

वकुला । अत्थि देवीए वण्णावरो भादा वीरसेनो णाम । सो भट्टिणा अन्तवालदुग्गे णम्मदातीरे ठाविदो । तेण सिप्पाहिआरे जोग्गा इअं दारिएत्ति बहिणीए देवीए उवाअणं पेसिदा । (३)

---

(१) प्रयोगे अभिनये विषये भाविकं भावाय शृङ्गाराद्यवस्थाविशेषाय हितं ठक् । तदनुगुणं यत् यत् मया तस्यै मालविकायै, उपदिश्यते बाला बाल्यावस्थापन्नापि वयसा चञ्चलेत्यर्थः । मे मह्यं तत्तत् भाविकं विशेषकरणात् मत्तोऽपि विलक्षणचेष्टादिककरणात् प्रत्युपदिशतीव प्रतिशिक्षयत्येव । यो हि विशेषज्ञः, स शिक्षकः इति सम्प्रदायादिति भावः ।

(२) वकुलावलिका । अतिक्रामन्तीमिवेरावतीं प्रेक्षे । कृतार्थेदानीं वः शिष्या यस्यां गुरुजन एवं तुष्यति । इरावती (अप्सरोविशेषः) ।

(३) वकुलावलिका । अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम । स भर्त्रान्तपालदुर्गे नर्मदातीरे स्थापितः । तेन शिल्पाधिकारे योग्य दारिकेति भगिन्या देव्या उपायनं प्रेषिता । वर्णतोऽवरः तत्पितुः वैश्यागर्भजातत्वात् तस्यावरत्वम् ।

गण । स्वगतम् । आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां (१) सम्भावयामि । प्रकाशम् । भद्रे ! मयापि यशस्विना भवितव्यम् । यतः

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ (२)

वकुला । अज्ज ! कहिं दाणिं वो सिस्सा । (३)

गण । इदानीमेव पञ्चाङ्गादिक(४)मभिनयमुपदिश्य मया विश्रम्यतामित्यभिहिता दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति ।

---

(१) आकृतौ रूपादौ यो विशेषो वैलक्षण्यं तस्य प्रत्ययात् तद्रूपलिङ्गज्ञानात् एनाम् उक्तपूर्वां मालविकाम् अनूनमुत्तमं वस्तु कुलशीलादि यस्याः कप् । तथाविधां सम्भावयामि । इयं सत्कुलोत्पन्ना विशिष्टाकारादिमत्त्वादित्येवं तर्कयामीत्यर्थः ।

(२) पयोदस्य मेघस्य जलं समुद्रशुक्तौ न्यस्तमिति शेषः । मुक्ताफलतामिव आधातुः वप्तुः प्रकरणात् शिक्षकस्य शिल्पं पात्रे उत्तमभाजने न्यस्तं सत् गुणान्तरं विशेषगुणं व्रजति याति । वीजवप्तारमपेक्ष्य पात्रोत्कर्ष एव गुणविशेषे कारणमिति भावः ।

(३) वकुलावलिका । आर्य्य कुत्रेदानीं वः शिष्या ।

(४) "चित्ताचिभ्रूहस्तपादैरङ्गैश्चेष्टादिसाम्यतः । पात्राद्यवस्थाकरणं पञ्चाङ्गोऽभिनयो मतः" इत्युक्तपञ्चाङ्गकम् आदिपदेन "भवेदभिनयोऽवस्थानुकारः स चतुर्विधः । आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा" इत्युक्तचतुरङ्गकम् । अभिनयं पात्रादेः चित्तादिभिः साम्यकरणम् । प्रकर्षेण वातस्तमासेवमाना भजमाना ।

वकुला । तेण हि अणुजाणादु मं अज्जो जाव से अज्ज-परितोसणिवेदणेण उस्साहं वड्ढेमि । (१)

गण । दृश्यतां सखी । अहमपि लब्धक्षणः (२) स्वगेहं गच्छामि ।

इति निष्क्रान्तौ ।

मिश्र(३)विष्कम्भकः ।

---

(१) वकुलावलिका । तेन ह्यनुजानातु मामार्य्यः । यावदस्या आर्य्य-परितोषनिवेदनेनोत्साहं वर्धयामि ।

(२) लब्धः प्राप्तः क्षणो येन प्राप्तावसर इत्यर्थः ।

(३) सङ्कीर्णः विष्कम्भकः नाटकाङ्कविशेषः मध्यनीचपात्रैश्चेटीद्वय-गणदासैर्निर्वर्त्तितत्वात् । यथोक्तम् दर्पणे, "वृत्तवर्त्तिष्यमाणानां कथां-शानां निदर्शकः । संक्षिप्तार्थस्तु विष्कम्भः आदावङ्कस्य दर्शितः ।" इति । "शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्य-प्रयोजितः" इति च ।

ततः प्रविशत्येकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्य-

(१) मानो राजा ।

राजा । अनुवाचितलेखममात्यं विलोक्य । वाहतक ! किं प्रति पद्यते वैदर्भः ? ।

अमात्य । देव ! आत्मविनाशम् ।

राजा । निदेशमिदानीं ज्ञातुमिच्छामि । (२)

अमा । इदमिदानीमनेन (३) प्रतिलिखितम् । पूज्येनाह-मादिष्टः (४) । पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रति-श्रुतसम्बन्धो ममोपान्तिकमुपसर्पन्नन्तरा त्वदीयेनान्तपालेनाव-स्कन्द्य गृहीतः स त्वया मदपेक्षया सकलत्रसोदर्य्यो मोचयि-

(१) अन्वास्यमानः पश्चादुपवेशनेन सेव्यमानः "अन्वासितमरुन्धत्येति वत् अनुपूर्वकासतेः सकर्मकत्वम् ।

(२) निदिश्यते इति निदेशः पणोऽभिसन्धिरिति यावत् ।

(३) अनेन वैदर्भेण (विदर्भनृपेण) इदम्, अनुपदं दर्शयिष्यमाणं प्रतिलिखितं प्रत्युत्तरत्वेन लिखितम् ।

(४) इदंपदाभिधेयमाह, पूज्येनेत्यादि । पूज्येन अग्निमित्रेण भव-तेत्यर्थः । भवतः वैदर्भस्य पितृव्यपुत्रः कुमारो युवराजो नाम्ना माधव-सेनः प्रतिश्रुतसम्बन्धः वैवाहिकसम्बन्धं प्रतिश्रुत्येत्यर्थः । मम अग्नि-मित्रस्य उपान्तिकं समीपं उपसर्पन् आगन्तुमारभमाणः अन्तरा गमन-पथमध्ये त्वदीयेन वैदर्भसम्बन्धिना अन्तस्य पर्य्यन्तस्य पालेन रक्षकेण अवस्कन्द्य अवरुध्य निगृहीत इति । सः माधवसेनः त्वया वैदर्भेण मद-पेक्षया ममाग्निमित्रस्यापेक्षया अनुरोधेन अन्यत् स्पष्टम् । इत्यन्तमग्नि-मित्रपत्रमनूदितम् ।

तव्य इति । (१) तत्र वो न विदितं यत्तुल्याभिजनेषु भूमिधरेषु राज्ञां वृत्तिः । अतोऽत्र मध्यस्थः पूज्यो भवितुमर्हति । सोदरा (२) पुनरस्य ग्रहणविप्लवे विनष्टा । तदन्वेषणाय यतिष्ये । अथ अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः (३) । श्रूयतामभिसन्धिः ।

आर्य्यसचिवं मुञ्चति यदि पूज्यः संयतं मम श्यालम् ।
मोक्ता माधवसेनं ततोऽहमपि बन्धनात् सद्यः ॥ (४)

राजा । सरोषम् । कथं कार्य्यविनिमयेन मयि व्यवहरत्य-

---

(१) तदनूद्य प्रत्युत्तरयति, तत्र व इति । तत्र तस्मिन् विषये वो युष्माकमग्निमित्रस्येत्यर्थः गौरवे बहुत्वम् । न विदितं यत् उक्तं तत् किं ? तदाह यत् तुल्याभिजनेषु तुल्यवंशेषु भूमिधरेषु राजसु राज्ञां वृत्ति-र्व्यवहारः । तथा च माधवसेनः अस्माकमेकान्वयजः तत्र ज्ञातिभिः सहवैरं विशेषतो नृपाणां भवत्येव अतः कारणात् अस्मिन् विषये पूज्योऽ-ग्निमित्रो भवान् मध्यस्थः मध्ये उभयपक्षसाहाय्यस्याभावे स्थितः ।

(२) सोदरेत्युक्तिः प्रकृतकथोपयोगिनी तच्चाग्रे स्पष्टं भविष्यति ।

(३) माध्यस्थ्यं विहाय माधवसेनपक्षपातित्वं कर्त्तव्यं चेत् तत्राह, अथेति । अथ माध्यस्थ्यं विहाय माधवसेन-पक्षपातित्वे मया वैदर्भेण हेतुकर्त्रा पूज्येन मान्येन भवताऽग्निमित्रेण प्रयोजककर्त्रा-माधवसेनोऽवश्यं मोचनीयस्तदा अयमभिसन्धिः अभिमुखः पणः उद्देश्यो वा ।

(४) यदि पूज्यो भवान् संयतम् इतःपूर्वं भवताग्निमित्रेण बद्धम् आर्य्यसचिवं श्रेष्ठामात्यं मम श्यालं मुञ्चति तदा माधवसेनमप्यहं बन्धनात् सद्यो मोक्ता मोचनकर्त्ता स्यामित्यर्थः । मोक्तेति •शीलार्थतृणन्तत्वात् न तद्योगे कर्मणि षष्ठी ।

नात्मज्ञः। वाहतक! प्रकृत्यमित्रः (१) प्रतिकूलकारी च मे वैदर्भः। तद् (२) यातव्यपक्षे स्थितस्य पूर्वसङ्कल्पितसमुन्मूलनाय वीरसेनमुखं दण्डचक्र(३)माज्ञापय।

अमा। यदाज्ञापयति देवः।

राजा। अथ वा किं भवान्मन्यते।

अमा। शास्त्रदृष्टमाह देवः।

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात्।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम्॥ (४)

राजा। तेन ह्यवितथं तन्त्रकारवचनम्। इदमेव निमित्तमादाय समुद्योज्यतां सेनापतिः।

अमा। तथा। इति निष्क्रान्तः।

परिजनो यथाव्यापारं राजानमभितः स्थितः।

प्रविश्य

विदू। आणत्तोम्हि तत्तभवदा रण्णा। गोदम! चिन्तेहि

---

(१) प्रकृत्यमित्रः प्रकृत्या स्वभावेन अमित्रः शत्रुः विषयानन्तरितराजत्वात्।

(२) यातव्यपक्षे युद्धार्थमभियास्यमानपक्षे शत्रुपक्षे इति यावत्।

(३) दण्डयते हरिरेभिर्दण्डाः सैन्यानि तेषां चक्रं समुदायम्।

(४) प्रकृतिषु प्रजादिषु अचिराधिष्ठितराज्यः अचिरप्राप्ताधिकारः अरूढमूलत्वात् अदृढमूलत्वात् नवसंरोपणशिथिलः नवाधिरोहणेन शिथिलः श्लथमूलः समुद्धर्त्तुमुत्पाटयितुं नाशयितुं च सुकरः।

दाव उवाअं, जह मे जदिच्छादिट्ठपडिकिदी मालविआ पच्चक्खदंसणा होदि त्ति । मए अ तं तहा किदं दाव से णिवेदेमि । (१) इति परिक्रामति ।

राजा । विदूषकं दृष्ट्वा । अयमपरः कार्य्यान्तरसचिवोऽस्मानुपस्थितः ।

विदू । उपगम्य । वड्ढदु भवम् । (२)

राजा । सशिरःकम्पम् । इत आस्यताम् ।

विदूषक उपविष्टः ।

राजा । कच्चिदुपायोपेयदर्शने (३) व्यापृतं ते प्रज्ञाचक्षुः ? ।

विदू । पओअसिद्धिं पुच्छ । (४)

राजा । कथमिव ।

---

(१) विदूषकः । आज्ञप्तोऽस्मि । तत्रभवता राज्ञा । गौतम ! चिन्तय तावदुपायं यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति । मया च तत्तथा कृतं तावदस्य निवेदयामि । स०

(२) विदूषकः । वर्धतां भवान् । स०

(३) उपायेन हेतुविशेषेण उमेयस्य प्राप्यस्य प्रकरणादिह दृश्यस्येत्यर्थात् दर्शने साक्षात्कारणे, दृशेर्ण्यन्तात् ल्युट् । निमित्तार्थे सप्तमी । दर्शनायेत्यर्थः । ते तव प्रज्ञैव चक्षुः पदार्थपरिच्छेदकत्वात् बुद्धिनेत्रं व्याप्टतं स्वविषयग्रहणाय समर्थं कच्चित् ? मालविकाया मह्यं दर्शनाय उपायं किं ? चिन्तितानित्यर्थः ।

(४) विदूषकः । प्रयोगसिद्धिं पृच्छ । स० प्रयुज्यतेऽस्मै इति प्रयोगः फलं तस्य मालविकादर्शनरूपस्य सिद्धिं पृच्छ किमुपायचिन्तनपृच्छयेति भावः ।

विदू। कर्णे। एव्वं विअ (१) इत्यावेदयति।

राजा। साधु वयस्य! निपुणमुपक्रान्तम्, इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयं त्वाशंसामहे। (२) कुतः

सप्रतिबन्धं कार्य्यं प्रभुरधिगन्तुं सहायवानेव।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि॥ (३)

नेपथ्ये। अलमलं बहु विकत्थ्य (४)। राज्ञः समक्षमेवावयोरधरोत्तरयोर्व्यक्तिर्भविष्यति।

---

(१) विदूषकः। एवमिव। स॰ नाट्याचार्य्येण गणदासेन हरदत्तस्य विवादमुत्थाप्य शिष्यप्रयोगदर्शनात् तन्निर्णयेऽवष्टते गणदासेन स्वशिष्यया मालविकया अभिनयकरणसमये तस्याः प्रत्यक्षदर्शनं भविष्यति तच्चानुपदं दर्शयिष्यते।

(२) दुरभिगमा दुर्लभा सिद्धिर्यस्य तादृशेऽपि अस्मिन् मालविकासाक्षात्कार-निष्पादनरूपे आरभ्यते इति कर्म्मणि घञ्। कार्य्ये त्वामेव सहायमिति शेषः इदानीम् आशंसामहे सम्भावयामीत्यर्थः।

(३) सहायवानेव सप्रतिबन्धं बाधकवाध्यं कार्य्यं फलमधिगन्तुं प्राप्तुं प्रभुः समर्थो भवति नासहायवानित्यर्थः। व्यतिरेकेण सहकारिसम्बन्धस्य कार्य्यहेतुत्वं समर्थयितुमाह, दृश्यमित्यादि। सचक्षुरपि चक्षुष्मानपि अनेन दृष्टिकारणसम्पत्तिर्दर्शिता। दीपेन आलोकहेतुपदार्थेन विना तमसि अन्धकारे अनेन दृष्टिप्रतिबन्धो दर्शितः। स्थितमिति शेषः। दृश्यं द्रष्टुं योग्यम् उद्भूतरूपवत् वस्तु द्रव्यं पश्यति। दर्शने च आलोकवान् दीपादिः सहकारी "गृह्णाति चक्षुःसंबन्धादालोकोद्भूतरूपयोः" इत्युक्तेः।

(४) नटानां पात्रवेशपरिग्रहादानं नेपथ्यम्। अलं विकत्थ्य विकत्थ-

राजा । आकर्ण्य । सखे ! त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्नमिदम् ।

विदू । फलं पि देक्खिस्ससि । (१)

ततः प्रविशति कञ्चुकी ।

कञ्चु । देव ! अमात्यो विज्ञापयति अनुष्ठिता प्रभोराज्ञेति । एतौ पुनर्हरदत्तगणदासावुभावभिनयाचार्यौ परस्परजयैषिणौ त्वां द्रष्टुमुद्यतौ साक्षाद्भावाविव शरीरिणौ ।

राजा । प्रवेशय तौ ।

कञ्चु । यदाज्ञापयति देवः ।

इति निष्क्रम्य ताभ्यां सह प्रविष्टः ।

कञ्चु । इत इतो भवन्तौ ।

गण । राजानं विलोक्य । अहो दुरासदो राजमहिमा ।

न च न परिचितो न चाप्यरम्य-
श्चकितमुपैमि तथापि पार्श्वमस्य ।
सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः ॥ (२)

---

मेन (आत्मगुणाविष्करणेन) अलं तत्साध्यं नास्तीत्यर्थः । निषेधार्थकालंशब्दयोगे ल्यप् ।

(१) विदूषकः । फलमपि द्रक्ष्यसि । स०

(२) राजा न परिचित इति न किन्तु परिचित एव परिचितत्वाञ्च न भयहेतुरित्यर्थात् अरम्यः इत्यपि न, तेनापि न भयहेतुः । तथापि चकितं भीतं यथा तथा उपैमि उपसर्पामि अत्र भयहेतोरभावेऽपि भय-

हरदत्तः। महत्खलु पुरुषाकारमिदं ज्योतिः। तथा हि

द्वारे नियुक्तपुरुषानुमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन्।
तेजोभिरस्य विनिवर्तितदृष्टिपातै
र्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि ॥ (१)

कञ्चु। एष देवः, उपसर्पतां भवन्तौ।

उभौ। उपेत्य। विजयतां देवः।

राजा। स्वागतं भवद्भ्याम् (२)। परिजनं विलोक्य। आसने तावदत्रभवतोः।

---

वर्णनात् विभावनालङ्कारः। न केवलं भयहेतुत्वमपि तु आश्चर्यत्वमपीत्याह, स एवेति सः दृष्टचर एव अयं प्रत्यक्षदृश्यो राजा सलिलनिधिरिव प्रतिक्षणम् अक्ष्णोर्नेत्रयोर्विषये दर्शने इत्यर्थः। नवो नवः नवप्रकारः प्रकारे द्विर्वचनम्। भवति।

(१) द्वारे नियुक्तपुरुषेण दौवारिकेण नित्यापेक्षतयाऽसमस्तविशेषणत्वेऽपि समासः। अनुमतः अभ्युपगतः प्रवेशो यस्य अनिवारित इत्यर्थः। सिंहासनान्तिकचरेण राजसन्निहित-परिचारकेण कञ्चुकिना सह अनेनाभयत्वं प्रीतिभाजनत्वञ्चोक्तम् उपसर्पन् अन्तिकं गच्छन् विनिवर्त्तितः दुःसहत्वात् निवारितः स्वस्मिन् दृष्टिपातो नेत्रविक्षेपो येस्तादृशैर्दुर्दर्शैरित्यर्थः। अस्य राज्ञस्तेजोभिः शरीरकान्तिभिः प्रभावैर्वा पुनरपि प्रतिवारितः निवारितोऽस्मि। अनेन उपजीविनामपि दुरासदत्वोक्त्याऽन्येषां दुरासदत्वमर्थतो दर्शितमिति भावः।

(२) सु सुखेन आगतमागमनं भवद्भ्यां भवतोरित्यर्थः। क्रियया समप्रीतोति सम्प्रदानता।

उभौ परिजनोपनीतयोरासनयोरुपविष्टौ।

राजा। किमिदं ? शिष्योपदेशकाले युगपदाचार्य्याभ्यामत्रो-पस्थानम्।

गण। देव! श्रूयताम्। मया सुतीर्थाद(१)भिनयविद्या सुशिक्षिता। दत्तप्रयोग(२)श्चास्मि देवेन, देव्या च परिगृहीतः।

राजा। बाढं जाने। ततः किम्।

गण। सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षम् "अयं न मे पादरजसापि तुल्य" इत्यधिक्षिप्तः।

हर। देव! अयमेव प्रथमं परिवादकरः। अत्रभवतः किल मम च समुद्रपल्वलयोरिवान्तरमिति। तदत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु। देव एव नौ विशेषज्ञः प्राश्निकः। (३)

विदू। समत्थं पडिण्णादम्। (४)

गण। प्रथमः कल्पः। अवहितो देवः श्रोतुमर्हति।

---

(१) सुतीर्थात् सुन्दरस्थानात् विशिष्टाध्यापकात् "आख्यातोपयोगे" इत्यपादानता।

(२) देवेन दत्तः प्रयोगः प्रयोगाधिकारः नाट्याभिनयाधिकार इति यावत् यस्मै तादृशः देव्या च परिगृहीतः आत्मपक्षीयत्वेनाभ्युपगतः।

(३) प्रश्नं वादिप्रतिवादिनौ प्रति विवादानुगतविषयपृच्छां करोति ठक्। विवादनिर्णायकः।

(४) विदूषकः। समर्थं प्रतिज्ञातम्। स०

राजा । तिष्ठ तावत् । पक्षपातमत्र देवी मन्यते । तदस्याः पण्डितकौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः । (१)

विदू । सुट्ठु भवं भणादि । (२)

आचार्यौ । यद्देवाय रोचते ।

राजा । मौद्गल्य ! अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्धमाहूयतां देवी ।

कञ्चु । यदाज्ञापयति देवः ।

इति निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविष्टः ।

कञ्चु । इत इतो भवती ।

धारि । परिव्राजिकां विलोक्य । भअवदि ! हरदत्तस्स गणदासस्स अ संरम्भं कहं पेक्खसि । (३)

परिव्राजिका । अलं स्वपक्षावसादशङ्कया । न परिहीयते प्रतिवादिनो गणदासः ।

धारि । जइवि एव्वं तहवि राअपरिग्गहो मे पहुत्तणं उवहरदि । (४)

---

(१) वादिप्रतिवादिनोः प्रतिज्ञोत्तरादिकारणानां सदसद्विचनेन जयपराजयसम्पादकः क्षपादीनामनुमित्याद्यात्मकः विचारापरपर्य्यायोव्यापारो व्यवहारः ।

(२) विदूषकः । सुष्ठु भवान् भणति । स०

(३) धारिणी । भगवति ! हरदत्तस्य गणदासस्य च संरम्भं कथं प्रेक्षसे । स० । उभयोर्मध्ये कस्य जयसम्भावयसि ।

(४) धारिणी । यद्यप्येवं तथापि राजपरिग्रहोऽस्य प्रभुत्वमुप-

परि । अयि राज्ञीशब्दभाजनमात्मानमपि चिन्तयतु भवती । पश्य

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः ।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ (१)

विदू । अविहा अविहा । उवट्ठिदा देवी पीठमद्दिअं पण्डिदकोसिइं पुरोकरिअ तत्तभोदी धारिणी । (२)

राजा । पश्याम्येनां येषा

---

हरति । स० राज्ञां परिग्रहः स्वकीयत्वेन स्वीकारः अस्य प्रभुत्वं महिमानम् वर्द्धयति ।

(१) राज्ञा स्वकीयत्वेनाङ्गीकारस्य महिमहेतुत्वमिव भवदीय-परिग्रहस्यापि तथात्वं दृष्टान्तेन समर्थयितुमाह, अतिमात्रभासुरत्वमिति । भानोः सूर्य्यकिरणस्य परिग्रहात् रात्रौ स्वस्मिन् संक्रमात् अनलः भासुरोऽप्यतिमात्रभासुरत्वं दिवातनवह्निमपेक्ष्य पुष्णाति धारयति तथा चन्द्रोऽपि निशया परिगृहीतः सम्बद्धः दिवातनचन्द्रापेक्षयेत्यर्थात् महिमानं माहात्म्यम् अतिमात्रभासुरत्वमधिगच्छति प्राप्नोति । अत्र भानुःपरिग्रहादह्न इति क्वाचित्कः पाठः असङ्गततया उपेक्ष्यः । अह्नः परिग्रहाभावे सूर्य्यस्यैवाभावात् कुतो भासुरत्वं स्यात् उत्तरवाक्ये तु चन्द्रस्य दिवापि सत्त्वात् माहात्म्याभावमात्रं निशाभावे दर्शितमिह तु न तत्सम्भव इति विवेच्यम् ।

(२) विदूषकः । अपिहा अपिहा । उपस्थिता देवी पीठमर्दिकां (सहचारिणीम्) पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी । स० अपि हेत्यव्ययमाश्चर्य्ये द्विरुक्तिरादरद्योतनाय ।

मङ्गलालङ्कृता भाति कौशिक्या यतिवेषया ।
त्रयी विग्रहवत्येव सममध्यात्मविद्यया ॥ (१)

परि । उपेत्य । विजयतां देवः ।

राजा । भगवति ! अभिवादये ।

परि ।

महासारप्रसवयोः सदृशक्षमयोर्द्वयोः ।
धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम् ॥

धारि । जेदु जेदु अज्जउत्तो । (२)

राजा । स्वागतं देव्यै । परिव्राजिकां विलोक्य । भगवति ! क्रियतामासनपरिग्रहः ।

सर्वे उपविशन्ति ।

राजा । भगवति ! अत्रभवतोर्हरदत्तगणदासयोः परस्परं विज्ञानसंघर्षिणोर्भगवत्या प्राश्निकपदमध्या[सनीयम्]सितव्यम् ।

परि । सस्मितम् । अलमुपालम्भेन पत्तने सति ग्रामे रत्नपरीक्षा ? ।

राजा । नैतदेवम् । पण्डितकौशिकी खलु भगवती । पक्षपातिनावहं देवी च ।

---

(१) अध्यात्मविद्यया वेदान्तप्रतिपाद्यविद्यया ब्रह्मात्मैक्यज्ञानेन समं त्रयी कर्मप्रतिपादकवेदत्रयमिव यतिवेषया कौशिक्या सह मङ्गलालङ्कृता मङ्गलेन धर्मेण मङ्गलार्थद्रव्यैश्चालङ्कृता भूषिता देवी इयं भाति प्रकाशते इत्यर्थः ।

(२) धारिणी । जयतु जयत्वार्यपुत्रः । स० .

आचा । सम्यगाह देवः । मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति ।

राजा । तेन हि प्रस्तूयतां विवादः ।

परि । देव ! प्रयोगप्रधानं हि नाट्यशास्त्रम् किमत्र वाग्व्यवहारेण । कथं वा देवी मन्यते ।

देवी । जइ मं पुच्छसि तदा एदाणं विवादो एव्व ण मे रुच्चदि । (१)

गण । देवि ! न मां समानविद्यतया परिभवनीयमवगन्तु [मन्तु] मर्हसि ।

विदू । भो पेक्खामो उअरंभरिसंवादं किं मुधा वेदणदाणेण एदाणं । (२)

देवी । णं कलहप्पिओसि । (३)

विदू । मा एव्वं चण्डि ! अण्णोणकलहप्पिआणं मत्तहत्थिणं एक्कदरस्सिं अणिज्जिदे कुदो उवसमो । (४)

राजा । ननु स्वाङ्गसौष्ठवातिशयमुभयोर्द्रष्टवती भगवती ।

(१) देवी । यदि मां पृच्छसि तदैतेषां विवाद एव न मे रोचते । स०

(२) विदूषकः । भो पश्याम उदरंभरिसंवादम् । किं मुधा वेतनदानेन एतयोः । स० । उदरम्भर्योः परार्थानुसन्धानमन्तरेण स्वार्थपरयोरेतयो संवादं जयपराजयलक्षणं व्यवहारम् ।

(३) देवी । ननु कलहप्रियोऽसि । स०

(४) विदूषकः । मैवं चण्डि ! अन्योन्यकलहप्रियाणां मत्तहस्तिनामेकतरस्मिन्ननिर्जिते कुत उपशमः । स०

परि। अथ किम्।

राजा। तदिदानीमतः परं किमाभ्यां प्रत्याययितव्यम्। (१)

परि। तदेव वक्तुकामास्मि।

शिष्टा क्रिया कस्यचिदात्मसंस्था-
संक्रान्तिरन्यस्य विशेषयुक्ता।
यस्योभयं साधु स शिक्षकाणां
धुरि प्रतिष्ठापयितव्य एव॥ (२)

विदू। सुदं अज्जेहिं भअवदीए वअणं। एस पिण्डितत्थो उवदेसदंसणादो णिस्सओत्ति। (३)

हर। परमभिमतं नः।

गण। देवि! एवं स्थितम्।

---

(१) एतयोरङ्गस्य नाट्याङ्गस्य सम्पादनाय सौष्ठवे सौन्दर्य्ये दृष्टे अपरं किमाभ्यां प्रत्याययितव्यं बोधयितव्यमित्यर्थः। प्रतिपूर्व्वादिणोण्यन्तात् तव्यः बोधार्थत्वात् न गम्यादेशः।

(२) कस्यचित् शिक्षकस्य आत्मसंस्था स्वनिष्ठा क्रिया अभिनयादि-व्यापारः शिष्टा विशिष्टा उत्तरत्र विशेषयुक्तेति दर्शनात् तथार्थत्वम् अन्यस्य कस्यचित् संक्रान्तिः स्वशिक्षिते शिष्ये क्रियासंक्रमः प्रतिफलनं विशेष-युक्ता विशिष्टा यस्य शिक्षकस्य उभयं स्वगता शिष्ये संक्रान्तिश्चेत्युभयम् एतयोर्द्वयं साधु शोभनं, स शिक्षकाणां धुरि अग्रे स्थापयितव्यः सर्वशिक्ष-काग्रगण्यत्वेन स्वीकार्य्य इत्यर्थः।

(३) विदूषकः। श्रुतमार्य्याभ्यां भगवत्या वचनम्। एष पिण्डित-तार्थः। उपदेशदर्शनान्निर्णय इति। स० पिण्डितार्थः निष्कृष्टार्थः।

देवी । जदा उण मन्दमेधा सिस्सा उवदेसं मलिणेदि । तदाणं आआरिअस्स दोषो ? । (१)

राजा । देवि ! एवमापद्यते । विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति । (२)

देवी । जनान्तिकम् । कहं दाणिं । गणदासं विलोक्य । प्रकाशम् । अलं अज्जउत्तस्स उस्साहकारणं मणोरहं परिपूरिअ । विरम णिरत्यादो आरम्भादो । (३)

विदू । सुट्ठु भोदी भणादि । भो गणदास ! सङ्गीदअपदोवलम्भिअसरस्सइउवाअणमोदआइं खादमानस्स किं दे मुहणिग्गहेण विवादेण । (४)

---

(१) देवी । यदा पुनर्मन्दमेधा शिष्योपदेशं मलिनयति । तदानीम् आचार्य्यस्य दोषः ? । स० मलिनयति न गृह्णातीत्यर्थः ।

(२) अद्रव्यस्य अवस्तुनः मन्दमतेरिति यावत् । परिग्रहः विनेयतया स्वीकारः तदभितो भावो द्रव्यवत् प्रकाशते इत्युक्तेः परिगृहीतमद्रव्यमपिकारात् सुपात्रमित्यर्थः । विनेतुः शिक्षकस्य बुद्धेः प्रतिभाया लाघवं सौन्दर्य्यं प्राखर्य्यंति यावत् । प्रकाशयति उद्भावयति ।

(३) देवी जनान्तिकम् । त्रिपताकं करं कृत्वेत्याद्युक्तलक्षणं सा० द्दप० । कथमिदानीम् । अलमार्य्यपुत्रस्योत्साहकारणं मनोरथं परिपूर्य्य । विरम निरर्थादारम्भात् । स० उत्साहः अध्यवसायः औत्सुक्यञ्च तत्कारणं तद्वर्द्धकमार्य्यपुत्रस्य स्वामिनः मनोरथं पूरयित्वा अलम् । तत्पूरणसाध्यं नास्तीत्यर्थः । निषेधार्थकालंशब्दयोगे ल्यप् ।

(४) विदूषकः । सुष्ठु भवती भणति । भो गणदास ! संगीतकपदोप-

गण। सत्यमयमेवार्थो देवीवाक्यस्य। श्रूयतामवसरप्राप्तमिदानीम्।

लब्धास्पदोऽस्मीति विवादभीरो-
स्तितिक्षमाणस्य परेण निन्दाम्।
यस्यागमः केवलजीविकायै
तं ज्ञानपण्यं वणिजं वदन्ति ॥ (१)

देवी। अइरोवणीदा दे सिस्सा। अपरिणिट्ठिदस्स उवदेसस्स उण अण्णं आवेदणम्। (२)

---

लब्धमरस्वत्युपायनमोदकानि खादमानस्य किं ते मुखनिघर्षेण विवादेन। स० सङ्गीतकपटेन सङ्गीतकपलक्ष्येण उपलब्धानि नित्यानुशीलनेन अनुभूतानि सरस्वत्या उपायनभूतानि उपढौकनद्रव्याणीव मोदकानि खादमानस्य अश्नयतस्तव मुखनिघर्षेण मुखतिरस्कारकारकेण विवादेन शुष्ककलहेन किम्। तदनुशीलयतस्तव ईदृक्कलहे प्रवृत्तिरनुचितेत्यर्थः।

(१) अहं लब्धास्पदः प्राप्तप्रतिष्ठोऽस्मि इति हेतोः विवादभीरोः विवादे कदाचित् पराजयः स्यादित्याशङ्कया ततो भीतस्य परकर्त्तृकां निन्दाम्। स्त्रीविहिताकारयोगे वा षष्ठीति कर्त्तरि तृतीया। तितिक्षमाणस्य सहमानस्य यस्य जनस्य केवलजीविकायै आत्मजीवनमात्रार्थम् आगमः शास्त्रज्ञानं लाभोपायश्च भवति। तं ज्ञानमेव पण्यं विक्रेयं यस्य तादृशं वणिजं जीविकाभङ्गभीरुतयाऽपकृष्टपण्डितमित्यर्थः। वदन्ति पण्डिताः मन्यन्ते।

(२) देवी। अचिरोपनीता ते शिष्या। अपरिनिष्ठितस्योपदेशस्य पुनरन्यार्थमावेदनम्। स० अचिरेण आशु उपनीता उपदेशग्रहणाय

गण। अत एव मे निर्बन्धः।

देवी। तेन हि दुवेवि भअवदीए उवदेसं दंसेह। (१)

परि। देवि नैतन्न्याय्यम्। सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय।

देवी। जनान्तिकम्। मूढे परिव्वाजिए मं जग्गतिं पि सुत्तं विअ करेसि। (२) इति सासूयं परावर्तते।

राजा देवीं परिव्राजिकायै दर्शयति।

परि

अनिमित्तमिन्दुवदने! किमत्रभवतः पराङ्मुखी भवसि।
प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः॥ (३)

---

दीक्षिता ते शिष्या मालविका इत्यर्थः। अतोऽचिरोपनीतत्वेन न सम्यक् शिक्षितेति गम्यते अपरिनिष्ठितस्य स्थैर्यमप्राप्तस्य उपदेशस्य शिष्ये संक्रामणरूपव्यापारस्य आवेदनं ज्ञापनं प्रकृतेऽभिनयदर्शनेन सदसत्त्वबोधनम् अमार्यमनुचितमित्यर्थः। एतदुक्तिश्च राज्ञा मालविकायाः कथञ्चिदपि दर्शनं न भवत्वित्याशयेन गणदासस्य तदभिनयनिवारणार्थेति द्रष्टव्या। एवमुत्तरत्रापि।

(१) देवी। तेन हि द्वावपि भगवत्यै उपदेशं दर्शयतम्।

(२) देवी। मूढे! परिव्राजिके! मां जाग्रतीमपि सुप्तामिव करोषि। स० जाग्रतीं मालविकाया राजसमीपे निगूहनरूपे स्वकर्त्तव्ये अप्रमत्ताम्। सुप्तां प्रमत्तामिव। स०

(३) हे इन्दुवदने! प्रसन्नमुखि! अत्रभवतः मान्यात् राज्ञः सकाशात् किं कथम् अनिमित्तम्। पराङ्मुखी विमुखी भवसि। कुटुम्बिन्यः सत्कुलस्त्रियः भर्तृषु प्रभवन्त्यः प्रभुत्ववत्योऽपि कारणादेव कोपो यासाम्

विदू। एं सकारणं एव्व। अत्तणो पक्खो रक्खिदव्वो गणदासं विलोक्य। एं दिट्ठिआ कोवव्वाजेण देवीए परित्तादो भवम्। सुसिक्खिदोवि सव्वो उवदेसदंसणेण णिण्णादो होदि। (१)

गण। देवि श्रूयताम्। एवं जनो गृह्णाति। तदिदानीं

विवादे दर्शयिष्यामि क्रियासंक्रान्तिमात्मनः।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया॥ (२)

आसनादुत्थातुमिच्छति।

देवी। का गई। पभवदि आआरिओ सिस्सजणस्स। (३)

गण। चिरमपदेशशङ्कितोऽस्मि (४)। राजानमवलोक्य।

---

ताहृश्यो भवन्ति न मुधा। तथा च कारणाभावे किमिति तव राज्ञः पराङ्मुखत्वम्।

(१) विदूषकः। ननु सकारणमेव। आत्मनः पक्षो रक्षितव्यः। ननु दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। सुशिक्षितोऽपि सर्व उपदेशदर्शनेन निष्णातो भवति। स० निष्णातः निपुणः।

(२) आत्मनः क्रियायाः अभिनयव्यापारस्य संक्रान्तिं शिष्ये उपदेशद्वारा संक्रमं शिष्यगतमात्मगुणमिति यावत्। दर्शयिष्यामि राज्ञः समीपे प्रकाशयिष्यामि।

(३) देवी। का गतिः। प्रभवत्याचार्यकः शिष्यजनस्य। स०

(४) अपदेशो निराकृतिस्तत्राशङ्का जाता यस्य तारकादित्वात् इतच्। कदाचित् शिष्यशिक्षादर्शने निवारितो भवेयमिति शङ्का स्थिता सा च राज्ञा एतद्वचनेन दूरीकृतेत्यर्थः।

अनुज्ञातं देव्या तदाज्ञापयतु देवः। कस्मिन्नभिनयवस्तुन्युपदेशं दर्शयिष्यामि।

राजा। यदादिशति भगवती।

परि। किमपि देव्या मनसि वर्तते ततः शङ्कितास्मि।

देवी। भण वीसद्धम् पभविस्सदि पभू अत्तणो परिअणस्स। (१)

राजा। मम चेति ब्रूहि।

देवी। भअवदि भण दाणिम्। (२)

परि। देव शर्मिष्ठायाः कृतिं चतुष्पादोत्थं छलिकं दुष्प्रयोज्यमुदाहरन्ति तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्यामः। तावता ज्ञायत एवात्रभवतोरुपदेशान्तरम्। (३)

आचार्यौ। यदाज्ञापयति भगवती।

विदू। तेण हि दुवेवि वग्गापेक्खागेहे संगीदरअणं करिअ

---

(१) देवी। भण विस्रब्धम्। प्रभविष्यति प्रभुरात्मनः परिजनस्य। स०

(२) देवी। भगवति भणेदानीम्। स०

(३) शर्म्मिष्ठायाः शुक्राचार्य्यस्य पत्न्याः कृतिम् कृदभिहितभावत्वात् कृतमित्यर्थः। चतुर्भ्यः पादेभ्य उत्तिष्ठति उत्थम् उत्तरपदद्विगुः। चतुष्पदीयुक्तमित्यर्थः। छलिकं तन्नामधेयकं नाटकं दुष्प्रयोज्यं दुःखेन प्रयोक्तुमभिनेतुं योग्यमुदाहरन्ति कथयन्ति पण्डिता इति शेषः। उभयोर्हरदत्तगणदासयोः एकार्थः तद्रूप एकस्य उद्देश्यः संश्रयो यस्यैतादृशं प्रयोगं क्रमेण उभयकर्तृकं तन्नाटकप्रयोगम् अभिनयं पश्याम प्रार्थनायां लोट्।

अत्तभवदो दूदं पेसध। अह वा मृदङ्गसद्दो ज्जेव्व णो उट्ठावइस्सदि। (१)

हरदत्तः। तथा। इत्युत्तिष्ठति।

गणदासो धारिणीमवलोकयति।

देवी। गणदासं विलोक्य। जयी भोदु अज्जो। णं विजअब्भत्थिणी अहं अज्जस्स। (२)

आचार्यौ प्रस्थितौ।

परि। इतस्तावत्।

आचार्यौ। परिवृत्य। इमौ स्वः।

परि। निर्णयाधिकारे ब्रवीमि। (३) सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु।

उभौ। नेदमावयोरुपदेश्यम्। इति निष्क्रान्तौ।

---

(१) विदूषकः। तेन हि द्वावपि वर्णमेवाग्टहे संगीतरचनां कृत्वात्रभवतो दूतं प्रेषयतम्। अथ वा मृदङ्गशब्द एव न उत्थापयिष्यति। वर्णस्य रूपान्तरस्यामेत्राया उद्भावनाया ग्टहं तत्र नेपथ्यस्थाने इत्यर्थः।

(२) देवी। जयी भवत्वार्यः। ननु विजयाभ्यर्थिन्यहमार्यस्य।

(३) निर्णयस्य युवयोः तारतम्यनिश्चयकरणस्याधिकारे स्थितेति शेषः। ब्रवीमि उपदिशामि। सर्वाङ्गसौष्ठवाभिव्यक्तये सर्वेषामङ्गानां सौष्ठवस्य सौन्दर्य्यस्याभिव्यक्तये प्रकाशनाय विगत-नेपथ्ययोः आहार्य्याभरणसज्जारहितयोः पात्रयोः अभिनेययोः नायकयोः प्रवेशः रङ्गभूमौ समागमोऽस्तु।

देवी । राजानमवलोक्य । जइ राअकज्जेसु वि ईरिसी णिउणदा अज्जउत्तस्स तदो सोहणं भोदि । (१)

राजा ।

अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदम् ।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥ (२)

नेपथ्ये मृदङ्गध्वनिः ।

सर्वे कर्णं ददति ।

परि । हन्त प्रवृत्तं संगीतकम् । तथा ह्येषा

जीमूतस्तनितविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुगमितस्य पुष्करस्य ।
निर्ह्रादिन्युपचि[हि]तमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि ॥ (३)

राजा । देवि ! तस्याः सामाजिका भवाम ।

---

(१) देवी । यदि राजकार्येषु अपीदृशी निपुणतार्यपुत्रस्य ततः शोभनं भवति । स०

(२) परस्परयशसि अन्योन्यकीर्त्तौ पुरोभागः दोषैकदर्शनं येषां तथा ।

(३) जीमूतस्तनितविशङ्किभिः मुरजध्वनौ मेघध्वनिशङ्किभिः अतएव उद्ग्रीवैर्हर्षात् उन्नमितकन्धरैर्मयूरैः अनुगमितस्य अनुनादितस्य पुष्करस्य वाद्यभाण्डस्य प्रकृते मुरजस्य निर्ह्रादिनी निर्ह्रादवती मधुरगम्भीरेत्यर्थः । उपचि[हि]तः मयूरस्वरानुनादनेन बहुलीभूतः मध्यमस्वरः तन्नामधेय-स्वरः तस्मात् उत्था उद्भवा मयूरस्येदम् अण् । मायूरी मयूरध्वनिसदृशी एषा [गद्योक्ता] मार्जना मूर्च्छना ताड़ना वा मनांसि मदयति हर्षयति ।

देवी। स्वगतम्। अहो अविणयो अज्जउत्तस्स। (१)

सर्वे उत्तिष्ठन्ति।

विदू। अपवार्य। भो धीरं गच्छ। तत्तभोदी धारिणी विसंवाददुस्सदि। (२)

राजा।

धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरावोऽयम्।
अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव॥ (३)

इति निष्क्रान्ताः सर्वे।

इति प्रथमोऽङ्कः।

---

(१) देवी। अहो अविनयः आर्यपुत्रस्य। स०। मत्समीपे एव मद्-निष्टदर्शनलालसारूपाऽनार्य्यव्यापारः अविनयः।

(२) विदूषकः। भो धीरं गच्छ। तत्रभवती धारिणी विसंवदि-ष्यति। स०। विसंवदिष्यति विप्रलप्स्यते अन्यथा मंस्यते।

(३) सिद्धेः निष्पत्तेः पन्थानं मार्गमवतरतः गच्छतः स्वस्य मन एव रथस्तस्य शब्द इव अयं श्रूयमाणः मुरजवाद्यरावः मृदङ्गरूपवाद्य-ध्वनिः धैर्य्यावलम्बिनमपि मां त्वरयति दर्शनाय त्वरितं करोति।

# द्वितीयोऽङ्कः ।



ततः प्रविशति [संगीतशालायाम् अ०] रचनायां कृतायामासनस्थः

सवयस्यो राजा, धारिणी, परिव्राजिका,

विभवतश्च परिवारः ।

राजा । भगवति ! अत्रभवतोराचार्य्ययोः कतरस्य प्रथमम् [उपदेशो दृश्यताम् ] [प्रयोगं द्रक्ष्यामः] ।

परि । ननु समानेऽपि ज्ञान[वृद्ध]भावे [वयोवृद्धत्वात् ]वयोऽधिकत्वात् गणदासः पुरस्कारमर्हति ।

राजा । तेन हि मौद्गल्य ! [निगाद्य अ०] एवमत्रभवतोरावेद्य नियोगमशून्यं कुरु ।

कञ्चु । यदाज्ञापयति देवः । इति निष्क्रान्तः ।

प्रविश्य ।

गण । देव ! शर्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति । तस्यास्तु [चतुष्पद[वस्तुकम् ]वर्णकम् अ०] छलिकप्रयोगमेकमना देवः श्रोतुमर्हति ।

राजा । आचार्य्य ! बहुमानादवहितोऽस्मि [तत्प्रवेशय पात्रम्] अ० ।

निष्क्रान्तो गणदासः ।

राजा । जनान्तिकम् । वयस्य !

नेपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः ।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम् ॥ (१)

विदू । अपवार्य । उवट्ठिदं णअणमहु [सण्णिहिदमक्खिअं च] [रसं जदिच्छं] ता अप्पमत्तो दाणिं पेक्ख । (२)

ततः प्रविशत्याचार्य्यावेक्ष्यमाणाङ्गसौष्ठवा मालविका ।

विदू । जनान्तिकम् पेक्खदु भवम् । ण क्खु से पडिच्छन्दादोवि हीअदि मऊरदा । (३)

राजा । अपवार्य । वयस्य !

चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम् ।
संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता ॥ (४)

---

(१) नेपथ्यगृहगतायाः सज्जागृहस्थितायास्तस्या मालविकायाः दर्शनसमुत्सुकं मे चक्षुः अधीरतया विलम्बासहिष्णुतया तिरस्करिणीं जवनिकां संहर्तुम् अपसारयितुमिव व्यवसितम् उद्युक्तम् ।

(२) विदूषकः । उपस्थितं नयनमधु सन्निहितमाक्षिकं तदप्रमत्त इदानीं प्रेक्षस्व । स० । नयनस्य मधु इव पाठान्तरे नयनमधुरसं मधु इवास्वाद्य यदृच्छम् यथेच्छम् ।

(३) विदूषकः । प्रेक्षतां भवान् । न खल्वस्याः प्रतिच्छन्दादपि हीयते मधुरता । स० प्रतिच्छन्दात् परनियोगानुवर्तित्वादपि सौन्दर्य्यं न हीयते ।

(४) चित्रगतायामस्यां दृष्टायामिति शेषः । तद्दर्शनकाले मे हृदयं कान्तिविसंवादशङ्कि एतस्याः ईदृशी कान्तिर्भवेन्न वेति सन्देहयुक्तमासीदिति शेषः । सम्प्रति इदानीं साक्षात्कारसमये येन शिल्पिना इयं चित्र-

गण । वत्से ! मङ्क्तसाध्वसा सत्त्वस्था (१) भव ।

राजा । स्वगतम् । अहो सर्वास्ववस्थास्वनवद्यता रूपस्य [विशेषस्य] तथा हि

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव ।
मध्यः पाणिमितोऽमितञ्च [नितम्बि] जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः ॥ (२)

---

गततया लिखिता तं शिल्पिनमित्यर्थात् शिथिलसमाधिम् अनिपुणलेख्य-सामग्रीकं मन्ये एतस्याः कान्तिलेखने या या सामग्री अपेक्षिता सा तस्य नासीदिति मन्ये इत्यर्थः ।

(१) सत्त्वे स्वभावे प्रकृतौ वा तिष्ठति स्था-क अव्यग्रा इति यावत् ।

(२) वदनं मुखं शरदिन्दोरिव कान्तिरस्य प्रसन्नमित्यर्थः । दीर्घे अक्षिणी यस्य षच्समासान्तः । दीर्घनेत्रञ्च । बाहू अंसयोः स्कन्धप्रदेशे नतौ लम्बमानावित्यर्थः । उरः वक्षस्थलं यद्यपि बृहदिति शेषः । तथापि निविड़ौ घनौ उन्नतौ स्तनौ यत्र तथाभूतं सत् संक्षिप्तं सङ्कुचितमिवेत्यर्थात् उन्नतस्तनाभ्यां बृहतोऽपि अल्पीभावकरणात् तथाभूतमिति भावः । पार्श्वे कुक्षिभागौ प्रमृष्टे इव सङ्कुचितत्वात् तयोरुत्प्रेक्षा । मध्यः मध्यदेशः पाणिमितः पाण्युपलक्षणेन मुष्टिमितः । जघनं पुनरमितं बृहत् नितम्बि इति पाठे नितम्बयुक्तं पर्वतसानुयुक्तमिति च व्यज्यते । पादौ अराला कुटिला अङ्गुलयो यत्र तादृशौ । नर्तयितुः नृत्याचार्य्यस्य गणदासस्य मनसि यथा छन्दः इच्छा यादृशाङ्गसौष्ठवे सति नर्तनं सुनिपुणं भवति, तथैवास्याः वपुः देहः श्लिष्टं संहतम् अतःसिद्धसौन्दर्य्यादिगुणकतया संबद्ध-मित्यर्थः ।

माल । उपगानं (१) कृत्वा चतुष्पदवस्तुकं गायति ।

दुल्लहो पिओ तस्सिं भव हिअअ ! णिरासं
अम्मो अपङ्गओ मे फुरइ किंपि वामओ ।
एसो सो चिरदिट्ठो कहं उण दट्ठव्वो
णाह ! मं पराहीणं तुइ गणअ सतिण्हम् ॥ (२)

---

(१) उपगानम् गानात् प्राक्कर्तव्यं वसन्तादिरागानुगतं स्वरविशेषम् [आलापचारि] इति ख्यातम् ।

(२) मालविका ।

दुर्लभः प्रियस्तस्मिन् भव हृदय ! निराशम्
अहहापाङ्गको मे स्फुरति किमपि वामकः ।
एष स चिरदृष्टः कथं पुनर्द्रष्टव्यो
नाथ ! मां पराधीनां त्वयि गणय सतृष्णाम् ॥ स०

प्रियः अभीष्टो यतो दुर्लभः । हे हृदय ! चित्त ! अतस्तस्मिन् निराशम् आशारहितं भव दुर्लभस्याशास्यत्वानौचित्यात् ततो निवर्तस्वेत्यर्थः । अहह इत्यव्ययम् हर्षे एवमाशायाः वैकल्यसम्भावनायामपि ये मम वामकोऽपाङ्गकः किमपि किञ्चित् स्फुरति स्त्रीणां वामाक्षिस्पन्दनं हि अभीष्टसमागमसूचकं तथा च पुनराशंसे प्रियसमागमो मे भावी । वामाङ्गस्फुरणात् तथाशंसेति भावः । स चिरदृष्टः एषः सङ्कल्पेन सदा मनसि प्रत्यक्षायमाणः प्रियः कथं पुनः द्रष्टव्यः चक्षुषा साक्षात् कर्तव्यः एवमात्मनो दर्शनाभिलाषमभिधाय सङ्कल्पोपनीतं नाथं संबोध्याह हे नाथ ! अगतिकगते ! पराधीनाम् अवशां मां त्वयि त्वद्विषये सतृष्णां सानुरागां गणय मन्यस्व एतच्च पद्यं चतुष्पदबद्धम् प्रकृतार्थानुगुणञ्च एतदेव द्वारीकृत्य मालविकया आत्मानुरागो न्टपे दर्शितस्तच्चाग्रे विदूषकवाक्ये स्फुटीभविष्यति । अत्र च चतुर्षु पादेषु चतस्रोऽवस्था वैराग्यौत्सुक्य-सङ्कल्पात्मसमर्पणरूपा दर्शिताः ।

ततो यथारसमभिनयति ।

विदू । अपवार्य । भो वअस्स ! चदुप्पदवत्थुअं दुवारीकरिअ तुइ उवट्ठाविदो विअ अप्पा अत्तभोदीए । (१)

राजा । सखे ! एवमावयोर्हृदयम् । अनया खलु

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्वम् ।
प्रणयगतिमदृष्ट्वा धारिणीसन्निकर्षा-
दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥ (२)

मालविका गीतान्ते निष्क्रान्तुमारब्धा ।

विदू । भोदि चिट्ठ । किं पि वो विसुमरिदो तत्त कम्मभेदो । तं दाव पुच्छिस्सम् । (३)

---

(१) विदूषक । भो वयस्य चतुष्पदावस्थाकं द्वारीकृत्य त्वयुपस्थापित इवात्मात्रभवत्याः । स० । चत्वारि पदा न्येव चतस्रः अवस्थाः वैराग्यौत्सुक्य-सङ्कल्पात्मसमर्पणरूपा यत्र तादृशं पद्यं द्वारीकृत्य तत्पाठच्छलेन आत्मा उपस्थापितः उपहाररूपेण दत्त इत्यर्थः ।

(२) हे नाथ ! इमं मादृशं जनमनुरक्तं त्वयीति शेषः । विद्धि-जानीहि इति गेये अभिनयन्त्या अङ्गादिभावं दर्शयन्त्या अनया मालविकया धारिणीसन्निकर्षात् सपत्नीसमक्षवशात् प्रणयगतिम् अदृष्ट्वा असम्भाव्य स्वाङ्गनिर्देशपूर्वं स्वाङ्गं निर्दिश्य इममित्युच्चारणकाले इदंपदार्थतया स्वस्याङ्गं निर्दिश्येत्यर्थः । सुकुमारप्रार्थनाव्याजं छलं यत्र तथाभूतं यथा तथा अहमिव उक्तः तद्वाक्यम् मामुद्दिश्यैव तया प्रयुक्तमिवेत्यर्थः ।

(३) विदूषकः । भवति तिष्ठ । किमपि वो विस्मृतः कर्मभेदः । तं

गण । वत्से क्षणमात्रं स्थित्वोपदेशविशुद्धा यास्यसि ।

मालविका स्थिता ।

राजा । स्वगतम् । अहो सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति । तथा हि

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्यादस्याः स्थितमतितरां कान्तमृज्वायतार्धम् ॥ (१)

देवी । एं गोदमवअणं पि अज्जो हिअए करेदि । (२)

गण । देवि मा मैवम् । देवप्रत्ययात् संभाव्यते सूक्ष्मदर्शिता गौतमस्य । पश्य

---

तावत्प्रक्ष्यामि । स० । एतदुक्तिश्च मालविकायाः कियत्क्षणपर्यन्तं तत्र स्थापनाय व्याजमात्रार्था ।

(१) सन्धौ संश्लेषस्थाने स्तिमितं निश्चलं वलयं यत्र तादृशं वामं हस्तं नितम्बे न्यस्य स्रस्ता मुक्ता यस्मात् तादृशं द्वितीयं दक्षिणं हस्तं श्यामाविटपसदृशं श्यामालता-शाखातुल्यं कृत्वा पादाङ्गुष्ठेनालुलितं चालितं कुसुमं यत्र तादृशे कुट्टिमे पातिताक्षं दत्तनेत्रम् अस्याः नृत्यात् अतितरां ऋजु सरलम् आयतार्द्धं दीर्घार्द्धं शरीरस्येत्यर्थात् कान्तं(मत)स्थितम् । यद्वा पातितमक्षमक्षि नेत्रमेव आयतमर्द्धं यस्य तादृशं सत् कान्तं बभूवेत्यर्थः ।

(२) देवी । ननु गौतमवचनमप्यार्यो हृदये करोति ।

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ (१)

विदूषकं विलोक्य । तच्छृणुमो विपश्चितमार्य्यस्य ।

विदू । गणदासं विलोक्य । कोसिइं दाव पुच्छ । पच्छा जो मए कम्मभेदो दिट्ठो तं भणिस्सम् । (२)

गण । भगवति! यथादृष्टमभिधीयतां गुणो वा दोषो वेति ।

परि । यथा दर्शितं सर्वमनवद्यम् । कुतः ।

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमुपगतस्तन्मयत्वं रसेषु ।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं तुदति विषयाद्रागबन्धः स एव ॥ (३)

---

(१) पङ्कच्छिदः कतकवृक्षस्य निकषेण घर्षणेनाविलं पय इव मन्दोऽपि विपश्चितः संसर्गेण सहवासादिना अमन्दतामेति ।

(२) विदूषकः । कौशिकीं तावत्पृच्छ । पश्चाद्यो मया कर्मभेदो दृष्टस्तं भणिष्यामि । स०

(३) अन्तर्हितवचनैः वचनमन्तरेणापि विक्षेपविशेषेण अन्तर्गतवचनैः अङ्गैः अर्थः अभिनेयपदार्थः सम्यक् सूचितः । पादन्यासः पादविक्षेपो लयं साम्यं तालसाम्यमिति यावत् । उपगतः रसेषु अभिनेयगतरसेषु तदाविर्भावव्यञ्जनाय तन्मयत्वम् तत्स्वरूपत्वमस्या इति शेषः । शाखायोनिः शाखातुल्यपाणिरेव योनिरुत्पत्तिसाधनं यस्य हस्ताश्रित इत्यर्थः । अभिनयः मृदुः स्वल्पः । तद्विकल्पानुवृत्तौ तस्य अभिनेयनायकादेः विकल्प्यन्ते इति विकल्पाः देहादिचेष्टादयस्तेषामनुवृत्तौ अनुसरणे भावस्तद्गतोऽवस्थाभेदः स एव अभिनेयनायकादिगत एव रागबन्धः अनुराग-

गण । देवः कथं मन्यते ।

राजा । वयं स्वपक्षशिथिलाभिमानाः संवृत्ताः । (१)

गण । अद्य नर्तयितास्मि । (२)

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।

श्यामायते न [युष्मासु] विद्वत्सु यः काञ्चनमिवाग्निषु ॥ (३)

देवी । दिट्ठिआ परिक्खाराहणेण अज्जो वड्ढदु । (४)

गण । देवि ! त्वत्परिग्रहोऽपि मे वृद्धिहेतुः । विदूषकं विलोक्य । गौतम ! वदेदानीं यत्ते मनसि वर्तते ।

विदू । पढमोवदेसदंसणे पढमं बम्हणपूजा कादव्वा । सा णं वो विसुमरिदा । (५)

---

सम्बन्धः विषयात् अन्यस्मादिति शेषः । भावं हृदयं तुदति आकर्षति विषयान्तरसंसर्गराहित्येन स्वप्रवणं करोतीत्यर्थः ।

(१) स्वपक्षे स्वरदत्तरूपे आत्मीये जने शिथिलः मन्दीभूतः अभिमानो येषां तादृशाः गुणपक्षपातेन स्वपक्षे समादरशून्या इत्यर्थः । संवृत्ताः जाताः ।

(२) अद्य इदानीं भवतामेतादृशवचनादिति शेषः । नर्तयित प्रशस्त-नर्तकः अस्मि अहं संवृत्त इति वचनविपरिणामेनानुवर्तते ।

(३) सन्तः साधवः अपक्षपातिन इति यावत् । उपदेशिनः शिक्षस्य-तम् उपदेशं शिक्षां शुद्धं दोषहीनं निर्मलश्च विदुः य उपदेशः अग्निषु काञ्चनमिव विद्वत्सु पाठान्तरे युष्मासु च न श्यामायते श्याम इवाचरति मलिनो न भवतीत्यर्थः ।

(४) देवी । दिष्ट्या परीक्षाराधनेनार्यो वर्धताम् । स०

(५) विदूषकः । प्रथमोपदेशदर्शने प्रथमं ब्राह्मणपूजा कर्तव्या । सा ननु वो विस्मृता । स०

परि। अहो प्रयोगाभ्यन्तरः प्रश्नः।

सर्वे प्रहृष्टिताः। मालविकापि स्मितं करोति।

राजा। स्वगतम्। उपात्तसारश्चक्षुषा मे स्वविषयः। (१)यदनेन (२)

स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम्।
असमग्रलक्ष्यकेशरमुच्छ्वसदिव पङ्कजं दृष्टम्॥ (३)

गण। महाब्राह्मण! न खलु प्रथमं नेपथ्यसवनमिदम्। (४) अन्यथा कथं त्वां दक्षिणीयं नार्चयिष्यामः।

विदू। मए णाम सुक्खघणगज्जिदे अन्तरिक्खे जलपाणेण [जलपाणं इच्छदा] चादआइदम्। (५)

---

(१) स्वविषयः चक्षुषो विषयः मे मम चक्षुषा नेत्रेण उपात्तः गृहीतः सारो यस्य तथाभूतो जातः द्रष्टव्यसारं दृष्टवच्चक्षुरिति भावः।

(२) उक्तार्थे हेतुः यदिति यत् यस्मात् अनेन चक्षुषा तस्य च पद्यस्थे दृष्टमित्यत्रान्वयः।

(३) आयताक्ष्याः विशालनेत्रायाः मालविकाया उच्छ्वसत् प्रकाशमानम् असमग्रं यथा तथा लक्ष्यं केशरं यस्य तादृशं पङ्कजं पद्ममिव किञ्चिदभिव्यक्तेन दशनेन दन्तेन शोभि, स्मयमानम् ईषत् हसत् मुखं दृष्टम्।

(४) नेपथ्यदर्शनमेव सवनमिदं न प्रथमम्, अपि तु चिराभ्यस्तमित्यर्थः। अन्यथा प्रथमनेपथ्यदर्शने इत्याशयः। दक्षिणामर्हति छ। दक्षिणीयं दक्षिणायोग्यं पूज्यमित्यर्थः।

(५) विदूषकः। मया नाम शुष्कघनगर्जितेऽन्तरीक्षे जलपानेन चातकायितम्। स० पाठान्तरे [जलपानमिच्छता] स०

परि। एवमेव।

विदू। तेण हि पण्डिदपरितोसपच्चआ णं मूढ़ा जादी। जदि अत्तभोदीए सोहणं भणिदं तदो इमं से पारितोसिअं पअच्छामि। इति राज्ञो हस्तात्कटकमाकर्षति। (१)

देवी। चिट्ठ गुणान्तरं अजाणन्तो किं णिमित्तं तुमं आहरणं देसि। (२)

विदू। परकेरन्ति करिअ। (३)

देवी। आचार्य्यं विलोक्य। अज्ज! गणदास! णं दंसिदोवदेसा दे सिस्सा?। (४)

गण। वत्से! एहि गच्छाव इदानीम्।

सहाचार्य्येण निष्क्रान्ता मालविका।

विदू। जनान्तिकम्। एत्तिओ मे मदिविहवो भवन्तं सेविदुम्। (५)

---

(१) विदूषकः। तेन हि पण्डितपरितोषप्रत्यया ननु मूढा जातिः। यद्यत्रभवत्या शोभनं भणितं तत इदमस्यै पारितोषिकं प्रयच्छामि। स० जातिः अस्मादृशजनः मूढ़ा स्वयमर्थपरिच्छेदासमर्था पण्डितपरितोष एव प्रत्ययो विशिष्टत्वे विश्वासो यस्यास्तादृशी स्वयं परिच्छेदासमर्था पण्डितपरितोषदर्शनेन निश्चयं करोतीति भावः।

(२) देवी। तिष्ठ गुणान्तरमजानन् किं निमित्तं त्वमाभरणं ददासि। स०

(३) विदूषकः। परकीयमिति कृत्वा। स० ददामीति शेषः।

(४) देवी। आर्य्य! गणदास! ननु दर्शितोपदेशा ते शिष्या?।

(५) विदूषकः। एतावान्मे मतिविभवो भवन्तं सेवितुम्।

राजा । अलमलं परिच्छेदेन । (१) अहं हि
भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव ।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करिणीम् ॥ (२)

विदू । जनान्तिकम् । साधु दरिद्दादुरो विअ वेज्जेण ओसहं उप्पादीअमाणं इच्छसि । (३)

प्रविश्य हरदत्तः ।

हर । देव ! मदीयमिदानीं प्रयोगमवलोकयितुं प्रसादः क्रियताम् ।

राजा । स्वगतम् । अवसितो (४) मे दर्शनार्थः । दाक्षिण्य- (५) मवलम्ब्य प्रकाशम् । ननु पर्युत्सुका एव वयम् ।

हर । अनुगृहीतोऽस्मि ।

---

(१) परिच्छेदेन एतावानिति इयत्ताकरणेनालम् ।

(२) तस्याः मालविकायास्तिरस्करिणीमन्तर्द्धानं जवनिकान्तःप्रवेश-मिति यावत् । अक्ष्णोर्नयनयोर्भाग्यास्तमयं भाग्यविनाशमिव, हृदयस्य महोत्सवावसानम् आनन्दविराममिव, धृतेः सन्तोषस्य द्वारपिधानं द्वाराव-रोधनमिव च मन्ये तस्या अदर्शने नेत्रं विफलमिव हृदयं निरानन्दमिव सन्तोषमाहृतमिव च मन्ये इत्याशयः ।

(३) विदूषकः । साधु दरिद्रातुर इव वैद्येनौषधमुत्पाद्यमान-मिच्छसि । स० वैद्यकृतौषधस्य बहुव्ययसाध्यत्वात् दरिद्रातुरस्य च तत्ता-सामर्थ्यात् ततो निवृत्तिः यथा स्यात् तत्तुल्यत्वमस्यासाध्यत्वात् ।

(४) अवसितः समाप्तः दर्शनार्थः दर्शनविषयः द्रष्टव्यसारदर्शनात् ।

(५) दाक्षिण्यं सर्वेषु तुल्यरूपताम् ।

नेपथ्ये । जयतु जयतु देवः । उपारूढो मध्याह्नः । तथा हि

पत्त्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्बलभिपरिचयद्वेषिपारावतानि ।
विन्दूत्क्षेपात् पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्रं
सर्वैरुस्रैः समग्रस्त्वमिव नृप! गुणैर्दीप्यते सप्तसप्तिः ॥ (१)

विदू । अविहा अविहा । अम्हाणं भोअणवेला । अत्तभवदो उइदवेलादिक्कमेण चिकिच्छआ दोसं उदाहरन्ति । हरदत्त ! किं भणासि । (२)

हर । अस्ति चान्यस्य वचनावकाशोऽत्र । (३)

राजा । हरदत्तमवलोक्य । तेन हि त्वदीयमुपदेशं श्वो द्रक्ष्यामः । विरम्यतां भवान् ।

---

(१) हंसा दीर्घिकापद्मिनीनां वापीसरोजिनीनां दलच्छायासु मुकुलितनयनाः सन्तः आसते इति शेषः । सौधानि अत्यर्थतापात् रविकिरणात्यर्थसंसर्गकृततापात् बलभिपरिचये वड़भ्यनुशीलने द्वेषिणः द्वेषयुक्ताः अननुरक्ताः पारावता यत्र तथाभूतानि । शिखी मयूरः पिपासुः सन् विन्दूत्क्षेपात् जलकणानामुत्क्षेपात् भ्रान्तिमत् भ्रमणयुक्तं जलयन्त्रं धारायन्त्रं परिसरति गच्छति । हे नृप ! सप्तसप्तिः सप्ताश्वः सूर्य्यः गुणैः समग्रः सम्पूर्णस्त्वमिव उस्रैः किरणैः समग्रः सन् दीप्यते भाति ।

(२) विदूषकः । अपिहा अपिहा । अस्माकं भोजनवेला । अत्रभवत उचितवेलातिक्रमेण चिकित्सका दोषमुदाहरन्ति । हरदत्त ! किं भणसि ।

(३) अत्र मध्याह्नसमये अन्यस्य वचनस्यावकाशोऽस्तीति काकाप्रश्नः ।

हर । यदाज्ञापयति देवः । इति निष्क्रान्तः ।

देवी । णिव्वत्तेदु अज्जउत्तो मज्झणविहिम् । (१)

विदू । भोदी विसेसेण पाणभोअणं तुवरावेदु । (२)

परि । उत्थाय । स्वस्ति भवते । इति देव्या सह निष्क्रान्ता ।

विदू । भो ण केवलं रूवे सिप्पे वि अदुदीआ मालविआ ।(३)

राजा । वयस्य !

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता ।

उपकल्पितो विधात्रा वाणः कामस्य विषदिग्धः ॥ (४)

किं बहुना चिन्तयितव्योऽस्मि ते ।

विदू । भवदावि अहं । दिढं विपणिकन्दू विअ मे हिअअब्भन्तरं ढज्झदि । (५)

राजा । एवमेव । भवानस्मदर्थे त्वरताम् ।

विदू । गिहीदक्खणोम्हि । किं तु मेहावलीरुद्धजोण्हा विअ पराहीणदंसणा तत्तभोदी मालविआ । भवंपि सूणापरि

---

(१) देवी । निर्वर्तयत्वार्यपुत्रो मध्याह्नविधिम् ।

(२) विदूषकः । भवती विशेषेण पानभोजनं त्वरयतु ।

(३) विदूषकः । भो न केवलं रूपे शिल्पेऽप्यद्वितीया मालविका ।

(४) अव्याजसुन्दरीम् अकपटमनोरमां ललितेन मनोहरेण विज्ञानेन शिल्पेन योजयता विधात्रा कामस्य विषदिग्धः विषाक्तः वाण इव उपकल्पितः ।

(५) विदूषकः । भवताप्यहम् । दृढं विपणिकन्दुरिव मे हृदयाभ्यन्तरं दह्यते । स० बुभुक्षयातीव पीड्यते इत्यर्थः ।

चरो विअ गिद्धो आमिसलोलुवो भीरुओ अ। अच्चन्तादुरो विअ कज्जसिद्धिं पत्थन्तो मे रोअसि। (१)

राजा। कथमनातुरो भविष्यामि। यदा

सर्वान्तःपुरवनिताव्यापारं प्रति निवृत्तहृदयस्य।
सा वामलोचना मे स्नेहस्यैकायनीभूता॥ (२)

इति निष्क्रान्ताः सर्वे।

इति द्वितीयोऽङ्कः।

---

(१) विदूषकः। गृहीतदक्षिणोऽस्मि। किं तु मेघावलीरुद्धज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका। भवानपि सूनापरिचर इव गृध्र आमिषलोलुपो भीरुकश्च। अत्यन्तातुर इव कार्यसिद्धिं प्रार्थयमानो मे रोचसे। स०

(२) परिहृतसर्वान्तःपुरवनिताव्यापारस्य मे मनसः सैवाकायनीभूता एकालम्बनमभूत्।

# तृतीयोऽङ्कः ।



ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका ।

समा । आणत्तम्हि भअवदीए । समाहिदिए ! देवस्स उववणत्थं वीजपूरअं गेण्हिअ आअच्छेत्ति । ता दाव पमदवणपालिअं मऊअरिअं अण्णेसामि । परिक्रम्यावलोक्य च । एसा तवणीआसोअं आलोअन्ती मऊअरिआ चिट्ठदि । जाव णं संभावेमि । (१)

ततः प्रविशत्युद्यानपालिका ।

समा । उपसृत्य । आलि ! [अवि अ०] सुहो दे उज्जाणवणव्वावारो ।(२)

मधु । अम्मो समाहिदिआ ? सहि ! साअदं दे । (३)

---

(१) समाहितिका । आज्ञप्तास्मि भगवत्या। समाहितिके ! देवस्योपवनस्थं वीजपूरकं गृहीत्वागच्छेति । तत्तावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती मधुकरिका तिष्ठति । यावदेनां संभावयामि । स०

(२) समाहितिका । आलि [अपि] सुखस्ते उद्यानवनव्यापारः । स०

(३) मधुकरिका । अहह समाहितिका ? । सखि ! स्वागतं ते । स०

समा। हला भअवदी आणवेदि। अरित्तपाणिणा अम्हा-रिसजणेण अत्तभवं [देवी] देक्खिदव्वो [व्वा] ता वीजपूरएण पेक्खिदुं [ सुस्सूसइदुं ] इच्छामि त्ति। (१)

मधु। णं सणिहिदं ज्जेव वीजपूरअं। कहेहि अण्णोण्ण-संघस्सिदाणं णट्टाआरिआणम् उवदेसं देक्खिअ कदरो भअव-दीए पसंसिदो। (२)

समा। दुवे वि किल [ क्खु ] आगमिणो पओअणि-उणा अ।

किं दु [सिस्साणुणविसेसेण उणमिदो गणदासो] [दिस्साए विसेसेण मालविकाए उणमिदो उवदेसो गणदासस्स]। (३)

मधु। अह मालविआगअं कोलीणं किं [किरिसं] सुणी-अदि। (४)

---

(१) समाहितिका। हला भगवत्याज्ञापयति। अरिक्तपाणिना-स्मादृगजनेनात्रभवान्द्रष्टव्यः [देवी द्रष्टव्या]। तद्वीजपूरकेण प्रेक्षितुम् [शुश्रूषयितुं] इच्छामीति। स०

(२) मधुकरिका। ननु संनिहितं वीजपूरकम्। कथय अन्योन्यसंघ-र्षितानां नाट्याचार्याणामुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः। स०

(३) समाहितिका। द्वावपि किल [खलु] आगमिनौ प्रयोगनिपुणौ च। किं तु शिष्यागुणविशेषेणोन्नमितो गणदासः। पाठान्तरे दृश्याया विशेषेण मालविकायाः उन्नमितः उपदेशो गणदासस्य। स०

(४) मधुकरिका। अथ मालविकागतं कौलीनं किं [ कीदृशम् ] श्रूयते। कौलीनं गुह्यव्यापारः।

समा। वाढं किल [वलीयं अ०] तस्सिं साहिलासो भट्टा। केवलं देवीए धारिणीए चित्तं रक्खन्तो अत्तणो पञ्जत्तणं ण दंसेदि। मालविआवि इमेसु दिअसेसु अणुहूदमुच्छा विअ मालदीमाला मिलाअमाणा लक्खीअदि। अदो अवरं ण जाणे। विसज्जेहि मं। (१)

मधु। एदं साहावलम्बि वीजपूरअं गेण्ह। (२)

समा। नाट्येन गृहीत्वा। हला तुमं वि इदो पेसलतरं साहुजणसुस्सूसाए फलं पावेहि। (३) इति प्रस्थिता।

मधु। सहि समं ज्जेव गच्छम्ह। अहं वि इमस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहलणिमित्तं देवीए णिवेदेमि। (४)

---

(१) समाहितिका। वाढं [वलीयः] किल तस्यां साभिलाषो भर्ता। केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं न दर्शयति। मालविकाप्येषु दिवसेष्वनुभूतमूर्च्छेव मालतीमाला म्लायमाना लक्ष्यते। अतोऽपरं न जाने। विसृज माम्। स०

(२) मधुकरिका। एतच्छाखावलम्बि वीजपूरकं गृहाण। स०

(३) समाहितिका। हला त्वमपीतः पेशलतरं साधुजनशुश्रूषया फलं प्राप्नुहि। स०

(४) मधुकरिका। सखि! समं गच्छावः। अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै निवेदयामि। दोहदस्य कुसुमप्रसवौषधभेदस्य निमित्तम् अपेक्षणीयतया निवेदयामि। अपेक्षणीयत्वे हेतुः चिरायमाणेत्यादि। स०

समा। जुज्जदि, अहिआरो क्खु तुह। (१)

इति निष्क्रान्ते।

प्रवेशकः। (२)

ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च।

राजा। आत्मानं विलोक्य।

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदय! परितापं व्रजसि किम्॥(३)

---

(१) समाहितिका। युज्यते। अधिकारः खलु ते।

(२) "प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा॥"

इत्युक्तलक्षणः अस्य च नीचपात्राभ्यां चेटीभ्यां प्रयोजितत्वात् द्वितीय तृतीयाङ्कद्वयमध्यगतत्वात् वृत्तवर्त्तिष्यमाणानां कथांशानां विष्कम्भकलक्षणोक्तानां प्रदर्शकत्वाच्च तथात्वम्।

(३) दयितालिङ्गनसुखे मालविकाया आलिङ्गनजनिते सुखे आनन्दे असति सति शरीरं क्षामं स्यात् सम्भावनायां लिङ्। शरीरक्षामता सम्भावितैवेत्यर्थः। अनेन खरजा कृशतावस्था सूचिता तया च आलिङ्गनसुखविमुक्तस्य कृशतोचितैवेत्यर्थः। एवं क्षणमपि दृष्टिशून्यत्वात् चक्षुषः सास्रत्वमाह भवेत् सास्रमिति। हे हृदय! तया अनुभूतया सारङ्गाक्ष्या मृगनेत्रया कदाचिदपि न विरहितम् मनसस्तदेकायतनत्वात् न तच्छून्य-

विदू । अलं भवदो धीरदं उज्झिअ परिदेविदेण । दिट्ठा मए मालविआए पिअसही बउलावलिआ सुणाविदा अ अत्थं जो भवदा संदिट्ठो । (१)

राजा । ततः किमुक्तवती ।

विदू । विण्णवेहि भट्टारअम् । अणुगिहीदम्हि इमिणा णिओएण । किं तु सा तवस्सिणी देवीए अहिअअरं रक्खी-अमाणा रक्खिदाणं विअ णिहीणं सुहं समासाददव्वा । तहवि जतिस्सं [घडइस्सं त्ति] । (२)

राजा । भगवन् ! सङ्कल्पयोने ! प्रतिबन्धवत्स्वपि विषयेष्व-भिनिवेश्य तथा प्रहरिष्यसि यथा जनोऽयं न कालान्तरक्षमो भवति ! सविस्मयम् ।

क्व रुजा हृदयप्रमाथिनी
क्व च ते विश्वसनीयमायुधम् ।

---

त्वम् । अतः तन्मयत्वेन निर्वाणे निर्वृतौ सुखे इति यावत् प्रसक्ते सति किं कथं परितापं व्रजसि अनुभवसि ।

(१) विदूषकः । अलं भवतो धीरतामुज्झित्वा परिदेवितेन । दृष्टा मया मालविकायाः प्रियसखी बकुलावलिका श्राविता चार्थं यो भवता सन्दिष्टः ।

(२) विदूषकः । विज्ञापय भट्टारकम् । अनुगृहीतास्म्यनेन नियो-गेन । किन्तु सा तपस्विनी देव्याधिकतरं रक्ष्यमाणा रक्षितानामिव निधीनां सुखं समासादयितव्या । तथापि यतिष्ये स० । अन्वीनमेलनायेति शेषः । पाठान्तरे घटयिष्यामि इति । स०

मृदुतीक्ष्णतरं यदुच्यते
तदिदं मन्मथ ! दृश्यते त्वयि ॥ (१)

विदू। णं भणामि तस्सिं साहणिज्जे कज्जे किदो मए उवाओवक्खेवोत्ति। ता पज्जवत्थावेदु भवं अत्ताणं। (२)

राजा। अथेमं दिवसशेषम् उचितव्यापारविमुखेन चेतसा क नु यापयामि।

विदू। अज्ज एव्व पढमावदारसुहआणि रत्तकुरवआणि उवाअणं पेसिअ णववसन्तावदारव्ववदेसेण इरावदीए णिउणिआमुहेण आचक्खिदो। इच्छेमि अज्जउत्तेण सह दोलाधिरोहणं अणुभविदुं त्ति। भवदावि संपडिण्णादम्। ता पमदवणं एव्व गच्छम्ह। (३)

---

(१) हृदयप्रमाथिनी हृदयनिष्पीड़िका रुजा रोगः क। ते तव विश्वसनीयम् कुसुममयत्वेन अपीड़ाकरत्वात् न विश्वासपात्रम् आयुधं शस्त्रं वाक। कुसुमशस्त्रेण भवता हृदयस्य पीड़नमतीवासम्भवमित्यर्थः। हे मन्मथ ! लोके मृदु कोमलं सदेव तीक्ष्णतरम् अतितीक्ष्णं यत् उच्यते तदिदं त्वयि दृश्यते तव शस्त्रस्य कुसुममत्वेन मृदुत्वात् तापकत्वाच्च तथात्वमिति भावः।

(२) विदूषकः। ननु भणामि तस्मिन् साधनीये कार्य्ये कृतो मयोपायोपक्षेप इति। तत्पर्य्यवस्थापयत्वत्रभवानात्मानम्। स०

(३) विदूषकः। अद्यैव प्रथमावतारसुभगानि रक्तकुरवकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेनाख्यातः। इच्छा-म्यार्य्यपुत्रेण सह दोलाधिरोहणमनुभवितुमिति। भवतापि सम्प्रतिज्ञातं तत्प्रमदवनमेव गच्छाव। स०। सम्प्रतिज्ञातमङ्गीकृतम्।

राजा । न खर्ममिदम् ।

विदू । कहं विश्र । (१)

राजा । वयस्य निसर्गनिपुणाः स्त्रियः । कथं मामन्यसंक्रान्तहृदयमुपलालयन्तमपि ते सखी न लक्षयिष्यति । (२) अतः पश्यामि

उचितः प्रणयो वरं विहन्तुं
बहवः खण्डनहेतवो हि दृष्टाः ।
उपचारविधिर्मनस्विनीनां
न तु पूर्वाभ्यधिकोऽपि भावशून्यः ॥ (३)

विदू । णारिहदि भवं अन्तेउरट्ठिदं दक्खिणं एक्कपदे पिङ्गदोकादुम् । (३)

(१) विदूषकः । कथमिव ।

(२) निसर्गेण स्वभावेन निपुणाः परचित्तज्ञानदक्षाः अन्यस्यां संक्रान्तं हृदयं यस्य वृत्तिगतत्वात् अन्याशब्दस्य पुंवद्भावः । तादृशं माम् उपलालयन्तम् बाह्यव्यापारेण आनुकूल्यमाचरन्तम् । ते तव सखी इरावती लक्षयिष्यति । अतः पश्यामि वक्ष्यमाणश्लोकोक्तमर्थमुद्भावयामि ।

(३) तमेवार्थमाह, उचित इति । प्रणयः स्नेहः तदुक्तविषयानुष्ठानाभावेन विहन्तुं खण्डयितुं वरमुचितः । तत्र हेतुमाह । हि यतः खण्डनस्य अभिमताननुष्ठानरूपस्य प्रणयखण्डनस्य हेतवः बहवोऽपि दृष्टाः कल्पयितुं शक्या इत्यर्थः । तु किन्तु पूर्वाभ्यधिकः पूर्वमभ्यधिकः प्रणयः । भावशून्यः सम्प्रति रागवर्जितः न वरमित्यनुषङ्गः अन्यासक्तचित्तत्वेन रागहीनत्वात् प्रणयोऽपि अकिञ्चित्कर इति भावः ।

(३) विदूषकः । नार्हति भवानन्तःपुरस्थितम् दाक्षिण्यमेकपदे

राजा । विचिन्त्य । तेन हि प्रमदवनमार्गमादेशय ।

विदू । इदो इदो भवम् । (१)

उभौ परिक्रामतः ।

विदू । णं एदं पमदवणं पवणबलचलाहिं पल्लवङ्गुलीहिं तुअरावेदि विअ भवन्तं पविसिदुम् । (२)

राजा । स्पर्शं रूपयित्वा । अभिजातः खलु वसन्तः । सखे! पश्य

उन्मत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव ।
अङ्गे चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्यापृतो माधवेन ॥ (३)

---

प्रवतः कर्तुम् । स० । अन्तःपुरस्थितं तद्विषयं दाक्षिण्यमानुकूल्यम् एकपदे सहसा प्रवतः कर्तुम् अपुरस्कृत्य तु निराकर्तुमिति यावत् भवान् नार्हति ।

(१) विदूषकः । इत इतो भवान् ।

(२) विदूषकः ननु एतत्प्रमदवनं पवनबलचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम् ।

(३) श्रवणसुभगैः श्रुतिसुखदायकैः उन्मत्तानां कोकिलानां कूजितैः मनसिजरुजः कामवेदनायाः सह्यतां सोढुं योग्यतां सानुक्रोशं सदयं यथा तथा मामिति शेषः । पृच्छतेव माधवेन वसन्तेन चूतप्रसवसुरभिराम्रकुसुमसुगन्धिः दक्षिणो मलयाचलसन्निकृष्टः मारुतः मे अङ्गे सान्द्रस्पर्शः करतल इव व्यापृतः हस्तस्य करतलेन स्पर्शो लोकसिद्धो माधवेन मलयवायुनेवाकारीत्यर्थः ।

विदू । पविस णिव्वुदिलाहाश्र । (१)

उभौ प्रविशतः ।

विदू । श्रवधाणेण दिट्ठिं देहि । एदं क्खु भवन्तं विश्र लोहइदुकामाए पमदवणलच्छीए जुवदीवेसलज्जावश्रतिश्रं कुसुमणेवत्थं गहिदम् । (२)

राजा । ननु विस्मयादवलोकयामि ।

रक्ताशोकलताविशेषितगुणो विम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरवकं श्यामावदातारुणम् ।
श्राक्रान्ता तिलकक्रियापि तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव सुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥ (३)

(१) विदूषकः । प्रविश निर्वृतिलाभाय । स०

(२) विदूषकः । अवधानेन दृष्टिं देहि । एतत्खलु भवन्तमिव लोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेशलज्जापयितृकं कुसुमनेपथ्यं गृहीतम् । स० । युवतीनां वेशस्य लज्जापयितृकम् लज्जाकारकम् ।

(३) माधवी मधुसम्बन्धिनी श्रीः शोभा योषितां सुखप्रसाधनविधौ सुखेन अप्रयत्नेन व्यापारसम्पादने सावज्ञेव जातेत्युत्प्रेक्षा कथमित्याह । विम्बमेवाधरः विम्बमधर इव इति वा तदुपयोगी अलक्तको यावकरसः रक्ताशोकलताविशेषितगुणः रक्तयाशोकलतया विशेषितः तुलितः गुणो यस्य । तथाभूतः जातः रक्ताशोकलतयैव अधरयोग्योऽलक्तकरसो निष्पादित इत्यर्थः । श्यामावदातारुणं श्यामं कृष्णमवदातं शुभ्रम् अरुणं च । वर्णो वर्णेनेति समासः । कृष्णश्वेतरक्तं कुरवकं तन्नामकपुष्पं प्रत्याख्यातविशेषकं तिरस्कृतं विशेषकं पत्रावल्यादिरचना येन तथाभूतं जातम् । लग्नद्विरेफा अञ्जनानीव यत्र तादृशैः तिलकैस्तरुपुष्पैः तिलकक्रिया श्राक्रान्ता

इत्युद्यानशोभां निरूपयतः ।

प्रविष्टा पर्युत्सुका मालविका ।

माल । अविण्णादहिअअं भट्टारअं अहिलसन्ती अत्तणोवि दाव लज्जेमि । कुदो विहवो सिणिद्धस्स सहीअणस्स वुत्तन्त आचक्खिदुम् । ण आणे अप्पडिआरगरुअं वेदणं कित्तिअं कालं मदणो मं णइस्सदि त्ति । कतिचित्पदानि गत्वा । कहिं ण पत्थिदम्हि । विचिन्त्य । आ संदिट्ठं देवीए । मालविए ! गोदमचावलादो दोलापरिब्भट्टाए सरुजो मह चलणो । ण सक्कोमि । तुमं दाव तवणीआसोअस्स दोहलं णिवट्टेहि । जइ सो पञ्चरत्तब्भन्तरे कुसुमं दंसेदि तदो तुह । इत्यन्तरा निःश्वस्य । अहिलासपूरइत्तिअं पसादं दाव इस्सं त्ति । ता जाव णिओअभूमिं पढमं गदा होमि । दात्र अणुपदं मम चलणालंकारहत्थाए वउलावलिआए आअन्तव्वम् । ता दाव परिदेविस्सं विस्सद्धं मुहुत्तअं । (१) इति परिक्रामति ।

---

अभिभूता तथा च अशोकलतया अधररागोपयोगी अलक्तकरसः, कुरवकेण विशेषकं, तिलपुष्पेण तिलकश्च तिरस्कृतमिति भावः ।

(१) मालविका । अविज्ञातहृदयं भट्टारकमभिलषन्त्यात्मनोऽपि तावल्लज्जामि । कुतो विभवः स्निग्धस्य सखीजनस्य वृत्तान्तमाख्यातुम् । न जानेऽप्रतिकारगुरुकां वेदनां * कियत्कालं मदनो मां नेष्यतीति । कुत्र तु प्रस्थितास्मि । आ संदिष्टास्मि देव्या । गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजौ मम चरणौ । न शक्नोमि † त्वं तावत्तपनीयाशोकस्य दोहदं निव-

विदू। दृष्ट्वा। ही ही एदं खु सीहुपाणुव्वेजिअस्स मच्छण्डिआ उवणदा। (१)

राजा। अये किमेतत्।

विदू। एसा णादिपरिक्किदवेसा उस्सुअवअणा एआदूणी मालविआ अदूरे [अहि अ०] वट्टदि। (२)

राजा। सहर्षम्। कथं मालविका।

विदू। अह इम्। (३)

राजा। शक्यमिदानीं जीवितमवलम्बयितुम्।

त्वदुपलभ्य समीपगतां प्रियां
हृदयमुच्छ्वसितं मम विक्लवम्।

---

र्तय, यदि स पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति ततस्तुभ्यमभिलाषपूरयितृकं प्रसादं दापयिष्यामीति। यावन्नियोगभूमिं प्रथमं गता भवामि। तावदनुपदं मम चरणालङ्कारहस्तया बकुलावलिकया आगन्तव्यम्। तत्परिदेविषेऽ तावद्विश्रब्धं मुहूर्तकम् स०। यतः प्रतिकारशून्या अतो गुरुका असह्येत्यर्थः *। न शक्नोमि गन्तुमिति शेषः †।

(१) विदूषकः। आश्चर्यम् एतत्खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता। स० मध्यपानविह्वलस्य यथा मत्स्यण्डिका फाणितमुपकारकं तथा मदनातुरस्य तव स्वयमुपनता अतर्कितमुपस्थिता मालविका।

(२) विदूषकः। एषा नातिपरिष्कृतवेशोत्सुकवदना एकाकिनी मालविका अदूरे वर्तते। स० पाठान्तरे अभिवर्त्तते आभिमुख्येनागच्छति।

(३) विदूषकः। अथ किम्। स०

तरुवृतां पथिकस्य जलार्थिनः
　　सरितमारसितादिव सारसात्॥ (१)

क्व तत्रभवती।

विदू। एसा तरुराइमज्झादो णिक्कन्ता इदोज्जेव परिवट्टन्ती दीसदि। (२)

राजा। पश्याम्येनाम्।

विपुलं नितम्बदेशे मध्ये क्षामं समुन्नतं कुचयोः।
अत्यायतं नयनयोर्मम जीवितमेतदायाति॥ (३)

सखे! पूर्वस्मादवस्थान्तरमुपारूढ़ा तत्रभवती। तथा हि

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा।
माधवपरिणतपत्त्रा कतिपयकुसुमेव कुन्दलता॥ (४)

---

(१) आरसितात् शब्दायमानात् सारसात् तत्स्वनमाकर्ण्येत्यर्थः। तरुवृतां वृक्षच्छायाच्छन्नां सरितं नदीमिव त्वत् भवतः सकाशात् समीपगतां प्रियामुपलभ्य श्रुत्वा जलार्थिनो पिपासोः पथिकस्येव मम विक्लवं हृदयम् उच्छ्वसितम् हर्षेण स्फीतमित्यर्थः।

(२) विदूषकः। एषा तरुराजिमध्यान्निष्क्रान्ता इत एव परिवर्तमाना दृश्यते। स०

(३) नितम्बदेशे श्रोण्यां विपुलं स्थूलं, मध्ये क्षामं क्षीणं, कुचयोः समुन्नतमुत्तुङ्गम् नयनयोरत्यायतम् एतत् मालविकावपूरूपं मम जीवितमायाति।

(४) माधवे वैशाखे परिणतं पक्वं पत्त्रं यस्याः तथाभूता कतिपयकुसुमा परिमितपुष्पा कुन्दलतेव परिमिताभरणा इयमाभाति।

विदू । एसावि भवं विश्र मश्रणव्वाहिणा परिमिट्टा भवि-स्सदि । (१)

राजा । सौहार्दमेवं पश्यति ।

माल । श्रश्रं सो ललिदसुउमारदोहलापेक्खी श्रगिहीद-कुसुमणेवत्थो उक्कण्ठिदाए मह सोश्रं श्रणुकरेदि । जाव से पच्छाश्रसीश्रले सिलापट्टए णिमस्सा श्रत्ताणं विणोदेमि । (२)

विदू । सुदं भवदा उक्कण्ठिदम्हि त्ति श्रत्तभोदी म-न्तेदि । (३)

राजा । नैतावता भवन्तं प्रसन्नतर्कं मन्ये । कुतः ।

वोढ़ा कुरवकरजसां किसलयपुटभेदशीकरानुगतः ।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः ॥ (४)

मालविकोपविष्टा ।

राजा । सखे ! इतस्तावदावां लतान्तरितौ भवावः ।

---

(१) विदूषकः । एषापि भवानिव मदनव्याधिना परिस्पृष्टा भवि-ष्यति । स०

(२) मालविका । अयं सः ललितसुकुमारदोहदापेक्षी अगृहीतकु-सुमनेपथ्य उत्कण्ठिताया मम शोकमनुकरोति । यावदस्य प्रच्छायशीतले निमग्ना आत्मानं विनोदयामि । स०

(३) विदूषकः । श्रुतं भवतोत्कण्ठितास्मीत्यत्रभवती मन्त्रयते । स०

(४) कुरवकरजसां तत्पुष्पपरागाणां वोढ़ा वहनकर्त्ता तेन सुगन्धि-रित्यर्थः । किसलयानां नवपल्लवानां पुटं भिनत्ति भिद-अण् । तेन मन्दः । शीकरैः तोयविन्दुभिरनुगतः तेन शीतलः पश्चात् कर्म्मधारयः । मलय-

विदू। इरावदिं विअ अदूरे पेक्खामि। (१)

राजा। न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः। इति विलोकयन् स्थितः।

माल। हिअअ! णिरवलम्बणादो अदिभूमिलङ्घिणो मणोरहादो विरम। किं मं आआसिअ। (२)

विदूषको राजानं वीक्षते।

राजा। पश्य मद्‌वत्त्वं स्नेहस्य।

औत्सुक्यहेतुं विवृणोषि न त्वं
तत्त्वावबोधैकफलो न तर्कः।
तथापि रम्भोरु! करोमि लक्ष्य
मात्मानमेषां परिदेवितानाम्॥ (३)

---

वातः मलयपर्वतसंसर्गी अनिलः नास्ति निमित्तं यस्याः तादृशीमपि मनसः उत्कण्ठाम् अपिः भिन्नक्रमे अनिमित्तामपीत्यर्थः जनयति।

(१) विदूषकः। इरावतीमिवादूरे प्रेक्षे। स० एतच्च राज्ञस्त्रासनार्थमुक्तम्।

(२) मालविका। हृदय! निरवलम्बनादतिभूमिलङ्घिनो मनोरथाद्विरम। किं मामायासय। स०

(३) हे रम्भोरु! प्रशस्तोरु! त्वम् औत्सुक्यस्य उत्कण्ठायाः हेतुम् कारणं न विवृणोषि न कथयसीत्यर्थः। तर्कोऽपि अनुमानविशेषोऽपि तत्त्वस्य वस्तुस्वाभाव्यस्य अवबोधः निश्चय एव एकं फलं यस्य तथाभूतो न भवति व्यभिचारादिसम्भवादिति भावः। अनुमानमात्रेण न वस्तुतत्त्वनिश्चयो भवतीत्यर्थः। तथापि आत्मानम् एषाम् त्वदुक्तानां परिदेवितानां विलापानां लक्ष्यम् उद्देश्यं करोमि कामः स्वतां पश्यतीति वत् भवदुक्तपरिपरिदेवनं मामुद्दिश्यैवेति तर्कयामीत्यर्थः।

विदू । सम्पदं भवदो [णिस्संसग्रं भवि] [संसग्रं हलि]-स्सदि । एसा अप्पिदमग्रणसंदेसा विवित्ते णं बउलावलिआ उवगदा । (१)

राजा । अपि स्मरेदस्मदभ्यर्थनाम् ? ।

विदू । किं दाणिं एसा दासीए दुहिदा दाव गरुअं संदेसं विसुमरेदि ? । (२)

प्रविश्य चरणालंकारहस्ता बकुलावलिका ।

बकुला । अवि सुहं सहीए । (३)

माल । अम्मो बउलावलिआ उवट्ठिदा? । सागदं दे, उवविस । (४)

बकुला । उपविश्य । हला तुमं दाणिं जोग्गदाए णिउत्ता । एकं दे चलणं उवणेहि जाव सालत्तग्रं सणेउरं करेमि । (५)

---

(१) विदूषकः । साम्प्रतं भवतः निःसंशयं भविष्यति । पाठान्तरे संशयं हरिष्यति । एषार्पितमदनसंदेशा विविक्ते ननु बकुलावलिकोपगता । स० अर्पितः मया संप्रेषितः मदनविषयकः सन्देश भवदुक्तिरूपो यया तादृशी ।

(२) विदूषकः । किमिदानीमेषा दास्या दुहिता तावद्गुरुकं संदेशं विस्मरति । स०

(३) बकुलावलिका । अपि सुखं सख्यै । स०

(४) मालविका । अहह बकुलावलिकोपस्थिता । स्वागतं ते । उपविश । स०

(५) बकुलावलिका । हला त्वमिदानीं योग्यतया नियुक्ता । एकं ते चरणमुपनय यावत्सालक्तकं सनूपुरं करोमि ।

माल । स्वगतम् । हिअअ ! अलं सुहिदाए । उवट्ठिदो अअं विहओ । कहं दाणिं अत्ताणं मोचेअम् । अह वा एदं एव्व मे मित्तुमण्डणं भविस्सदि । (१)

बकुला । किं विआरेसि । उस्सुआ खु इमस्स तवणी आसोअस्स कुसुमोग्गमे देवी । (२)

राजा । कथमशोकदोहलनिमित्तोऽयमारम्भः ।

विदू । किं क्खु ण आणासि । अकारणादो देवी इमं अन्तेउरणेवत्थेण जोजइस्सदि त्ति । (३)

माल । पादमुपहरति । हला मरिसेहि दाणिम् । (४)

बकुला । अइ सरीरंसि मे । (५) नाट्येन चरणसंस्कारमारभते ।

राजा ।

चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य ! रागलेखाम् ।

---

(१) मालविका । हृदय ! अलं सुखितया । उपस्थितोऽयं विभवः । कथमिदानीमात्मानं मुञ्चेयम् । अथ वैतदेव मे मृत्युमण्डनं भविष्यति ।

(२) बकुलावलिका । किं विचारयसि । उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमे देवी ।

(३) विदूषकः । किं खलु न जानासि । अकारणाद् देवी इमामन्तःपुरनेपथ्येन योजयिष्यतीति । स०

(४) मालविका । हला मर्षयेदानीम् । स०

(५) बकुलावलिका । अयि शरीरमसि मे । स०

प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य ॥ (१)

विदू । चलणाणुरूवो तत्तभोदीए अहिआरो उवक्खित्तो । (२)

राजा । सम्यगाह भवान् ।

नवकिसलयरागेणाग्रपादेन बाला-
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन ।
अकुसुमितमशोकं दोहदापेक्षया वा
प्रणमितशिरसं वा कान्तमार्द्रापराधम् ॥ (३)

विदू । पारइस्ससि तत्तभोदीए अवरद्धुं ? । (४)

राजा । मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य ।

---

(१) हे वयस्य ! सखे ! प्रियाया ! चरणान्तनिवेशितां सरसाम् आर्द्रां रागलेखां हरदग्धस्य शिवकोपानलभस्मीभूतस्य मनोभवद्रुमस्य कामकल्पतरोः प्रथमां पल्लवप्रसूतिमिव पश्य ।

(२) विदूषकः । चरणानुरूपस्तत्रभवत्या अधिकारः उपक्षिप्तः । स०

(३) बाला मालविका अनेन प्रत्यक्षदृश्येन नवकिसलयरागेण नवपल्लवताम्रेण स्फुरितनखरुचा प्रकाशितनखकान्तिना आर्द्रपादेन अलक्तकरसार्द्रचरणेन दोहदापेक्षया, कुसुमोद्गमार्थमौषधप्रदानानुरोधेन अकुसुमितमपुष्पितम् अशोकम्, आर्द्रापराधं प्रणयकृतापराधम् अभिनवापराधं वा प्रणतशिरसं नतमूर्द्धानं कान्तं प्रियञ्च एतौ द्वौ हन्तुं ताड़यितुमर्हति ।

(४) विदूषकः । पारयिष्यसि तत्रभवत्यामपराद्धुम् ? । स०

ततः प्रविशति युक्तमदा इरावती चेटी च ।

इरा । हञ्जे णिउणिए ! सुणामि वडुसो मदो किल इत्थिआअणस्स विसेसमण्डणं त्ति । अवि सच्चो अअं । [एसो] लोअवादो । (१)

निपु । पढमं लोअवादो एव्व सम्पदं सच्चो संवुत्तो । (२)

इरा । अलं मह सिणेहेण । कहेहि कुदो दाणिं अवगमिदव्वं दोलाघरं पढमागदो भट्टा ण वेत्ति । (३)

निउ । भट्टिणीए अखण्डिदादो पणआदो । (४)

इरा । अलं सेवाए । मज्झत्थदं परिग्गहिअ भणाहि । (५)

निउ । णं वसन्तोस्सवुबाअणलोलुवेण अज्जगोदमेण कहिअं । तुअरदु भट्टिणी । (६)

---

(१) इरावती । सखि ! निपुणिके ! शृणोमि बहुशो मदः किल स्त्रीजनस्य विशेषमण्डनमिति । अपि सत्य एषः [अयं] लोकवादः । स०

(२) निपुणिका । प्रथमं लोकवाद एव साम्प्रतं सत्यः संवृत्तः । स०

(३) इरावती । मयि स्नेहेनालम् । कथय कुत इदानीमवगन्तव्यं दोलागृहं प्रथममागतो भर्ता न वेति । स०)

(४) निपुणिका । भट्टिन्याः अखण्डितात् प्रणयात् । स० आगत इति शेषः ।

(५) इरावती । अलं सेवया । मध्यस्थतां परिगृह्य भण । स० सेवया परितोषार्थवाक्येन ।

(६) निपुणिका । ननु वसन्तोत्सवोपायनलोलुपेनार्य्यगौतमेन कथि-

इरा। अवस्थासदृशं परिक्रम्य। हञ्जे मदेण गिलाअमाणं अत्ताणं अज्जउत्तस्स दंसणे हिअअं तुअरावेदि चलणा उण ण ओसलन्ति। [ओलगन्ति] (१)

निपु। णं संपत्तम्ह दोलाघरअं। (२)

इरा। णिउणिए! अज्जउत्तो एत्थ ण दीसदि। (३)

निपु। णं भट्टिणी आलोएदु। परिहासणिमित्तं कहिंपि गूढ़ेण भट्टिणा होदव्वं। अम्हेवि इमं पिअङ्गुलदापरिक्खित्तं असोअसिलापट्टअं पविसामो। (४)

इरा। तहा। (५)

निपु। विलोक्य। आलोअदु भट्टिणी चूदङ्कुरं विचिणन्तीणं अम्हाणं पिपीलिआहिं दंसिदं। (६)

---

तम्। त्वरतां भट्टिनी। स० वसन्तोत्सवे यदुपायनद्रव्यं भोज्यादि तत्र लुब्धेनेत्यर्थः।

(१) इरावती। सखि! मदेन ग्लायमानमात्मानमार्य्यपुत्रस्य दर्शने हृदयं त्वरयति, चरणौ पुनः न प्रसरतः पाठान्तरे [अवलगतः]। स० संलग्नौ सन्तौ निश्चेष्टौ जाताविन्यर्थः।

(२) निपुणिका। ननु संप्राप्ते स्वो दोलागृहकम्। स०

(३) इरावती। निपुणिके! आर्य्यपुत्रः अत्र न दृश्यते।

(४) निपुणिका। ननु भट्टिन्यवलोकयतु। परिहासनिमित्तं कुत्रापि गूढ़ेन भर्त्रा भवितव्यम्। आवामपीदं प्रियङ्गुलतापरिक्षिप्तमशोकशिला-पट्टकं प्रविशावः।

(५) इरावती। तथा। स० अस्तु इति शेषः।

(६) निपुणिका। आलोकतां भट्टिणी चूताङ्कुरं विचिन्वत्योरावयोः

इरा। किं विश्र एदं ?। (१)

निपु। एसा असोअपादवच्छाआए मालविआए बउला-वलिआ चलणालंकारं णिवत्तेदि। (२)

इरा। शङ्कां रूपयित्वा। अभूमी इअं मालविआए। कहं एत्थ तक्केसि। (३)

निपु। तक्केमि दोलापरिब्भंसिदरुजचलणाए देवीए असोअदोहलाधिआरे मालविआ णिउत्तेत्ति। अण्णहा कहं देवी सअं-धारिदं एदं णेउरजुअलं परिअणस्स अब्भणुजाणिस्सदि। (४)

इरा। महदी मे संभावणा। (५)

निपु। किं ण अण्णेसीअदि भट्टा। (६)

---

पिपीलिकाभिर्दष्टम्। स० दन्श धातोर्भावेक्तः दंशनं क्षतमित्यर्थः। भावि-शापतभियैवमुक्तम्।

(१) इरावती। किमिवैतत् ?।

(२) निपुणिका। एषाशोकपादपच्छायायां मालविकाया बकुला-वलिका चरणालङ्कारं निर्वर्तयति। स०

(३) इरावती। अभूमिरियं मालविकायाः। कथमत्र तर्कयसि। स०

(४) निपुणिका। तर्कयामि दोलापरिभ्रष्ट-रुजचरणया देव्या [धारिणया] अशोकदोहदाधिकारे मालविका नियुक्तेति। अन्यथा कथं देवी स्वयंधारितमेतत् नूपुरयुगलं परिजनस्याभ्यनुज्ञास्यति। स०

(५) इरावती। महती मे सम्भावना। स० महती उत्कटकोटिका मे ममेति, कर्तरि षष्ठी।

(६) निपुणिका। किं नान्विष्यते भर्ता ?। स०

इरा । हञ्जे मे चलणा अग्गदो ण पवट्टन्ति । मदो मं वेआरेदि । आसङ्किदस्स दाव अन्तं गमिस्सं ।

मालविकां निरूप्यात्मगतम् । ठाणे क्खु कादरं मे हिअअं । (१)

बकुला । चरणं दर्शयति । किंवि ? रोअदि दे राअरेहा-विणासो । (२)

माल । अत्तणो चलणंत्ति लज्जेमि णं पसंसिदुं । केण ? सिप्पसाहणकलाए एव्वं अभिणीदासि । (३)

बकुला । एत्थ क्खु भट्टिणो सिस्सम्हि । (४)

विदू । तुवरेहि दाणिं गुरुदक्खिणाए । (५)

माल । दिट्ठिआ ण गव्विदासि ? । (६)

---

(१) इरावती । सखि ! मम चरणावग्रतो न प्रवर्त्तेताम् । मदो मां विकारयति । आशङ्कितस्य तावदन्तं गमिष्यामि । स्थाने खलु कातरं मे हृदयम् । स० मालविकादर्शने भर्तुस्यामनुरागः स्यान्न वेत्यादिशङ्कितं तस्य अन्तं परिच्छेदं तन्निवारकं निश्चयमित्यर्थः ।

(२) बकुलावलिका । किमपि ? रोचते ते रागरेखाविन्यासः । स०

(३) मालविका । आत्मनश्चरणमिति लज्जाम्येतत्प्रशंसितुम् । केन ? शिल्पसाधनकलायामेवमभिनीतासि । स०

(४) बकुलावलिका । अत्र खलु भर्तुः शिष्यास्मि । स०

(५) विदूषकः । त्वरयस्वेदानीं गुरुदक्षिणायै । स० गुरुदक्षिणां दातुं बकुलावलिकां त्वरयस्व त्वरितां कुरु तद्दक्षिणा च प्रकृते मालविकाया भवत्कृताभ्यर्थनैव ।

(६) मालविका । दिष्ट्या न गर्वितासि ? ।

बकुला। उबदेसाणुरूबे चलणे लम्भिअ दाणिं गव्विदा भविस्सं। रागं विलोक्यात्मगतम्। हन्त सिद्धो मे दप्पो। प्रकाशम्। सहि एक्कस्स अवसिदो राअणिक्खेवो। केवलं मुहमारुदो लम्भ-इदव्वो। अह वा पवादं एव्व एदं ठाणं। (१)

राजा। सखे पश्य पश्य।

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन शोषयतः।

प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे॥ (२)

विदू। कुदो दे अणुसओ?। एदं भवदा चिरक्कमेण अणुभ-विदव्वं। (३)

बकुला। सहि अरुणं सदपत्तं विअ सोहदि दे चलणं। सव्वहा भट्टिणो अङ्कपरिवट्टिणी होहि। (४)

---

(१) बकुलावलिका। उपदेशानुरूपे चरणे लब्ध्वा इदानीं गर्विता भविष्यामि। हन्त सिद्धो मे दर्पः। सखि! एकस्य ते चरणस्यावसितो रागनिक्षेपः। केवलं मुखमारुतो लम्भयितव्यः। अथ वा प्रवातमेवैत-त्स्थानम्। स०

(२) आर्द्रालक्तकम् आर्द्रयावकरसयुक्तं अस्याः मालविकायाः चरणं मुखमारुतेन फुत्कारेण शोषयतः अनार्द्रं कुर्वतो मे मम सेवावकाशः सेवासमयः प्रथमतरः सम्प्रति प्रतिपन्नः समुचित इत्यर्थः।

(३) विदूषकः। कुतस्तेऽनुशयः?। एतद्भवता चिरक्रमेणानुभवि-तव्यम्। स०

(४) बकुलावलिका। सखि! अरुणं शतपत्रमिव शोभते ते चर-णम्। सर्वथा भर्तुरङ्कपरिवर्तिनी भव। स०

इरावती निपुणिकामवेक्षते ।

राजा । ममेयमाशीः ।

माल । हला मा अविणीअं मन्तेहि । (१)

बकुला । मन्तिदव्वं एव्व मए मन्तिदं । (२)

माल । पिआ क्खु अहं तव । (३)

बकुला । ण केवलं मम । (४)

माल । कस्स ? वा अस्स । (५)

बकुला । गुणेसु अहिणिवेसिणो भट्टिणोवि । (६)

माल । अलिअं मन्तेसि । एदं एव्व मइ णत्थि । (७)

बकुला । सच्चं तुइ णत्थि । भट्टिणो किसेसु सुन्दरपाण्डुरेसु दीसइ अङ्गेसु । (८)

---

(१) मालविका । हला मा अविनीतं मन्त्रयस्व । स०

(२) बकुलावलिका । मन्त्रयितव्यमेव मया मन्त्रितम् । स०

(३) मालविका । प्रिया ! खल्वहं तव । स०

(४) बकुलावलिका । न केवलं मम । स०

(५) मालविका । कस्य वान्यस्य ? । स०

(६) बकुलावलिका । गुणेष्वभिनिवेशिनो भर्तुरपि ।

(७) मालविका । अलीकं मन्त्रयसे । एतदेव मयि नास्ति । स० गुण एव मयि नास्ति कुतस्तत्प्रियतेत्यर्थः ।

(८) बकुलावलिका । सत्यं त्वयि नास्ति । भर्तुः कृशेषु सुन्दरपाण्डरेषु दृश्यतेऽङ्गेषु । स० तत्कृशतादर्शनेन त्वय्यनुरागोऽनुमीयत इत्यर्थः ।

निपु। पढमं गणिदं विअ हदासाए उत्तरं। (१)

बकुला। अणुराओ अणुराएण परिक्खिदव्वो त्ति सुअण वअणं पमाणं करेहि। (२)

माल। किं अत्तणो छन्देण मन्तेमि ?। (३)

बकुला। ण हि ण हि। भट्टिणो क्खु एदाणि पणअमिदुआणि अक्खराणि विप्पेरिदाणि। (४)

माल। हला देवीं चिन्तिअ ण मे हिअअं विस्ससदि। (५)

बकुला। मुद्धे ! भमरसंबाधो अत्थि त्ति वसन्तावदारसंभूदो किं ? ण णवचूदप्पसवो ओदंसणिज्जो। (६)

---

(१) निपुणिका। प्रथमं गणितमिव हताशाया उत्तरम्। स० गणितशास्त्रमिव प्रथमं भाविवस्तुज्ञापकम्।

(२) बकुलावलिका। अनुरागोऽनुरागेण परीक्षितव्य इति सुजन-वचनं प्रमाणं कुरु।

(३) मालविका। किमात्मनः छन्देन मन्त्रयसे ?। स० छन्देन इच्छया।

(४) बकुलावलिका। न हि न हि। भर्त्तुः खल्वेतानि प्रणयमृदु-कान्यक्षराणि विप्रेरितानि। स० एतानीतीत्यनेन गौतमद्वारा प्रोक्तानि यानि तानि श्रावितानि कविना तु तानि न निबद्धानि गुह्यतायै तथात्वे एव चमत्कारापादकत्वात्।

(५) मालविका। हला देवीं चिन्तयित्वा न मे हृदयं विश्वसिति।

(६) बकुलावलिका। मुग्धे ! भ्रमरसंबाधोऽस्तीति किं न वसन्ताव-तारसंभृतः नवचूतप्रसवोऽवतंसनीयः ?। स० प्रतिबन्धकसत्त्वेऽपि इष्टेऽवश्यं प्रवृत्तिरिति भावः।

माल । तुमं जाव दुज्जादे गच्छन्तस्स सहाइणी होहि । (१)

बकुला । विमद्दसुरही बउलावलिआ क्खु अहं । (२)

राजा । साधु बकुलावलिके ! साधु

भावज्ञानानन्तरं प्रस्तुतेन
प्रत्याख्याने दत्तयुक्तोत्तरेण ।
वाक्येनेयं स्थापिता स्वे निदेशे
स्थाने प्राणाः कामिनो दूत्यधीनाः ॥ (३)

---

(१) मालविका । त्वं यावत् दुर्य्याते गच्छतः सहायिनी भव । स० दुर्य्याते दुरधिगमे स्थाने दुश्चेष्टिते वा गच्छतः जनस्य सहायिनी सहकारिणी त्वं भव न ममेत्यर्थात् ।

(२) बकुलावलिका । विमर्द्दसुरभी बकुलावलिका खल्वहम् । स० विगतो मर्द्दो मर्द्दनं पुरुषसम्बन्धः यस्यास्तथाभूता अतएव सुरभिः ख्यातिसम्पन्ना बकुलावलिकेत्यात्मनामकीर्त्तनेन बकुलावल्या यथा मर्द्दनाभावेऽपि स्वतःसिद्धसुगन्धित्वं तथा ममापीत्युक्तम् । दुश्चरिते नाहं सहायिनी तच्चरितस्यादुष्टत्वात् न तत्र सहायभवने मे दोष इत्याशयः ।

(३) भावज्ञानानन्तरं भावस्य अस्याः अनुरागस्य ज्ञानानन्तरं प्रस्तुतेन कृतप्रसङ्गेन प्रत्याख्याने तया निराकरणे कृते सतीति शेषः । दत्तयुक्तोत्तरेण दत्तं युक्तमुचितम् उत्तरं येन तादृशेन वाक्येन स्वे स्वकीये मदर्थाभ्यर्थनाप्रदर्शनरूपे निदेशे तत्प्रतिपालनरूपे इयं मालविका स्थापिता भवत्येति शेषः । कामिनो जनस्य प्राणाः दूत्यधीना दूतीवशीभूता यत् तत् स्थाने अतीव युक्तमित्यर्थः ।

इरा। हञ्जे पेक्ख कारिदं एव्व बउलावलिए एदस्सिं पदं मालविआए। (१)

निउ। भट्टिणि! णिव्विआरस्स अधिआरस्स उइदोवदेसो। (२)

इरा। ठाणे क्खु सङ्किदं मे हिअअं। गिहीदत्था अणन्तरं चिन्तइस्सं। (३)

बकुला। एसो [दुदिओ] वि दे संवुत्तपरिकम्मो चलणो जाव णं [उभे] वि सणेउरं करेमि। नाट्येन नूपुरयुगलमामुच्य। हला उट्ठेहि अणुचिट्ठ देवीए असोअस्स विआसत्तिअं णिओअं। (४)

उभे उत्तिष्ठतः।

इरा। सुदो देवीए णिओओत्ति। भोदु दाणिम्। (५)

(१) इरावती। सखि! प्रेक्षस्व कारितमेव बकुलावलिकयैतस्मिन् पदं मालविकायाः। एतस्मिन् स्वनियोगप्रतिपालने पदं व्यवसितमुद्यमः कारितमित्यर्थः।

(२) निपुणिका। भट्टिनि! निर्विकारस्याधिकारस्योचितोपदेशः। स०

(३) इरावती। स्थाने खलु शङ्कितं मे हृदयम्। गृहीतार्थोऽनन्तरं चिन्तयिष्यामि। स० यत् शङ्कितं तत् स्थाने उचितमित्यर्थः।

(४) बकुलावलिका। एषोऽपि [द्वितीयः] ते संवृत्तपरिकर्मा चरणः। यावत् एनम् [उभयम्] अपि सनूपुरं करोमि। हला उत्तिष्ठानुतिष्ठ देव्या अशोकस्य विकाशयित्रकं नियोगम्। स० विकाशयित्रकं प्रकाशनारूपम्।

(५) इरावती। श्रुतो देव्या नियोग इति। भवत्विदानीम्। स०

बकुला । एसो उवारूढ़राओ उवभोगक्खमो पुरदो दे चिट्ठदि । (१)

माल । सहर्षम् । किं भट्टा ? (२)

बकुला । सस्मितम् । ण दाव भट्टा । असोअसाहावलम्बी गुच्छओ ओदंसेहि दाव णं । (३)

मालविका विषादं नाटयति ।

विदू । किं सुदं भवदा ? । (४)

राजा । सखे ! पर्य्याप्तमेतावता कामिनाम् ।

अनातुरोत्कण्ठितयोः प्रसिध्यता
समागमेनापि रतिर्न मां प्रति ।
परस्परप्राप्तिनिराशयोर्वरं
शरीरनाशोऽपि समानुरागयोः ॥ (५)

---

(१) बकुलावलिका । एष उपारूढ़रागः उपभोगक्षमः पुरतस्ते तिष्ठति । स० उपारूढ़ोजाताङ्कुरो रागोऽनुरागो रक्तिमा च यस्य । उपभोगे यथेष्टभोगे क्षमः समर्थः ।

(२) मालविका । किं भर्त्ता ? । स० स्वाभीष्टस्य अग्निमित्रस्य स्वविषयानुरागवत्त्वेन उपभोगक्षमत्वेन च पुरतः स्थितिमाशङ्क्य तथा प्रश्नः ।

(३) बकुलावलिका । न तावद्भर्त्ता । अशोकशाखावलम्बी गुच्छकः अवतंसय तावदेनम् । स० गुच्छकस्यापि तथात्वेन तस्य च पुरतः स्थितिरित्यभिसन्धाय मया तथोक्तं न भर्त्तारमभिसन्धायेत्युत्तराशयः ।

(४) विदूषकः । किं श्रुतं भवता ? ।

(५) एतावता एतादृशश्रवणेनैव कामिनाम् अभीष्टमिति शेषः । पर्य्याप्तं सम्पूर्णम् कथं तत्राह । एकस्य अनातुरस्य अपरस्य च उत्-

मालविका । रचितपल्लवावतंसा सलीलमशोकाय पादं प्रहिणोति ।

राजा । वयस्य !

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।

उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥ (१)

माल । वामो क्खु एसो असोओ जो व्वञ्जअं पमाणीकदुय कुसुमुग्गमं ण दंसेदि अवि णाम अम्हाणं सम्भावना सफला हवे ? । (२)

बकुला। हला णत्थि दे दोसो अयं ज्जेव्व णिग्गुणो असोओ कुसुमुग्गमसन्थरो हवे जो दे चलणसक्कारं लम्भितः । (३)

---

कण्ठतस्य एतयोर्विषमानुरागयोः नायकनायिकयोः प्रसिध्यता कथञ्चित् निष्पद्यमानेनापि समागमेन साम्प्रति मदर्थे न वरम्, किन्तु समानुरागयो स्तयोः परस्परामर्षाप्तिनिराशयोः सतोः शरीरनाशोऽपि देहवियोगोऽपि वरम् । तथा च एतस्या मय्यनुरागवत्त्वात् समागमाभावे मम देह-त्यागोऽप्यभीष्टः नत्वस्या मय्यननुरागे समागम इति भावः ।

(१) अस्मात् अशोकात् कर्णकिसलयं कर्णभूषणार्थनवपल्लवम् आदाय गृहीत्वा अत्र अशोके इयं चरणमर्पयति । आत्मानम् उभयोः कर्णभूषण-चरणार्पणयोः सदृशविनिमयात् तुल्यरूपपरिवर्त्तेन वञ्चितमुभयभावशून्य-त्वेन अकृतार्थं मन्ये ।

(२) मालविका । वामः खलु एष अशोको यो व्यञ्जकं प्रमाणीकृत्य कुसुमोद्गमं न दर्शयति । अपि नामावयोः सम्भावना सफला भवेत् ? । स० सम्भावना उद्योगः ।

(३) बकुलावलिका । हला नास्ति । ते दोषः । अयमेव निर्गुणो ऽशोको यदि कुसुमोद्गमनमन्थरो भवेद्यस्ते चरणसत्कारं लम्भितः ।

राजा ।

अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन सम्भावितः ।
अशोक ! यदि सद्य एव मुकुलैर्न सम्पत्स्यसे
मुधा वहसि दोहदं ललितकामिसाधारणम् ॥ (१)

सखे ! वचनावकाशपूर्वकं प्रवेष्टुमिच्छामि ।

विदू । एहि णं परिहा[सा] सइस्सं । (२)

उभौ प्रवेशं कुरुतः ।

निपु । भट्टिणि ! भट्टिणि ! भट्टा एत्थ पविसदि । (३)

इरा । एदं मम पढमं चिन्तिदं हिअएण । (४)

विदू । उपेत्य । होदि ! जुत्तं णाम अत्तभोदी पिअवअस्से असोओ वामपाएण ताड़इदुं ? । (५)

---

(१) ललितकामिसाधारणं चारुकामिजनतुल्यं दोहदं पादनिक्षेपरूपं दोहदं मुधा मिथ्या वहसि ।

(२) विदूषकः । एह्येनां परि [सा] हासयिष्यामि ।

(३) निपुणिका । भट्टिनि ! भट्टिनि ! भर्त्तात्र प्रविशति ।

(४) इरावती । एतन्मम प्रथमं चिन्तितं हृदयेन ।

(५) विदूषकः । भवति ! युक्तं नामात्रभवति प्रियवयस्ये अशोको वामपादेन ताड़यितुम् ? । स० प्रियवयस्ये स्थिते इति शेषः । तस्य अविनय निवारकत्वात् तमनादृत्यं तथाचरणं युक्तंनाम ? न युक्तमित्यर्थः अथ च स एव वामपादेन ताड़नयोग्यस्तमनादृत्याशोकताड़नमयुक्तमिति ध्वनिः ।

उभे । ससंभ्रमम् । अम्मो भट्टा । जेदु जेदु भट्टा । (१)

विदू । बउलावलिए ! गिह्णीदत्थाए तुए अत्तभोदी ईदिसं अविणअं करन्ती कीस ण णिवारिदा । (२)

मालविका भयं रूपयति ।

निपु । भट्टिणि ! पेक्ख किं पउत्तं अज्जगोदमेण । (३)

इरा । कहं क्खु बम्हबन्धू अण्णहा जीविस्सदि । (४)

वकुला । अज्ज एसा देवीए णिओअं अणुचिट्ठदि । एदस्सिं अदिक्कमे परवदी इअं । पसीददु भट्टा । (५)

इति आत्मना सहैनां प्रणिपातयति ।

राज । यद्येवमनपराद्धासि । उत्तिष्ठ भद्रे ! । हस्तेन गृहीत्वोत्थापयति ।

विदू । जुज्जदि देवी एत्थ माणइदव्वा । (६)

राजा । विहस्य ।

किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे ।

---

(१) उभे । अहह भर्त्ता । जयति जयति भर्त्ता ।

(२) विदूषकः । बकुलावलिके ! गृहीतार्थया त्वयात्रभवतीदृशम-विनयं कुर्वती कस्मात् न निवारिता । स०

(३) निपुणिका । भट्टिनि ! प्रेक्षस्व किं प्रवृत्तमार्य्यगौतमेन । स०

(४) इरावती । कथं खलु ब्राह्मणबन्धुरन्यथा जीविष्यति ।

(५) बकुलावलिका । आर्य्ये ! एषा देव्या नियोगमनुतिष्ठति । एतस्मिन्नतिक्रमे परवतीयम् । प्रसीदतु भर्त्ता ।

(६) विदूषकः । युज्यते देव्यत्र मानयितव्या ।

चरणस्य न ते बाधा संप्रति वामोरु ! वामस्य ॥ (१)

मालविका लज्जां नाटयति ।

इरा । अहो णवणीदकप्पहिअओ अज्जउत्तो । (२)

माल । बउलावलिए ! एहि अणुचिट्ठिदं अत्तणो णि-
ओअं देवीए णिवेदेम्ह । (३)

बकुला । विण्णवेहि भट्टारं विसज्जेहि त्ति । (४)

राजा । भद्रे ! यास्यसि । मम तावदुत्पन्नावसरमर्थित्वं
श्रूयताम् ।

बकुला । अवहिदा सुणाहि । आणवेदु भट्टा । (५)

राजा ।

धृतपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रसृति ।

(१) हे वामोरु ! सुन्दरोरुके ! विलासिनि विलासवति कठिने
कठोरे पादपस्कन्धे वृक्षस्कन्धे निहितस्य अर्पितस्य वामस्य किसलयमृदोः
नवपल्लवकोमलायास्तव चरणस्य सम्प्रति बाधा पीड़ा भवेदिति शेषः ।

(२) इरावती । अहो नवनीतकल्पहृदय आर्य्यपुत्रः । स० दयार्द्र-
चित्तत्वात्तथात्वोत्प्रेक्षा सोल्लुण्ठनोक्तिरियम् ।

(३) मालविका । बकुलावलिके ! एह्यनुष्ठितमात्मनो नियोगं देव्यै
निवेदयावः ।

(४) बकुलावलिका । विज्ञापय भर्त्तारं विसृजेति ।

(५) बकुलावलिका । अवहिता शृणु इति मालविकामुक्त्वा राजानं
प्रत्याह । आज्ञापयतु भर्त्ता ।

स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः ॥ (१)

इरा। सहसोपसृत्य। पूरेहि पूरेहि। असोओ कुसुमं ण दंसेदि। अअं क्खु उण उत्तम्भिदो एव्व [ण पुप्फइ फलइ ज्जेव]। (२)

सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः।

राजा। अपवार्य्य। वयस्य! का प्रतिपत्तिरत्र ?

विदू। किं अण्णं ? जङ्घावलं एव्व। [सरणं अं॰] (३)

इरा। साहु बउलावलिए! साहु तुए उवक्कन्तं दाणिं करेहि सफलप्पत्थनं अज्जउत्तं। (४)

उभे। पसीददु भट्टिणी। काओ वअं भट्टिणो पणअपरिग्गहस्स। इति निष्क्रान्ते। (५)

---

(१) अयं मादृशः जनः चिरात्प्रभृति छृतपुष्पमपि तादृशं न बध्नाति अतः अनन्यरुचेः अगन्याभिलाषस्यास्य मादृशस्य जनस्य दोहदं प्रकाशकं अभीष्टं स्पर्शामृतेन पूरय।

(२) इरावती। पूरय पूरय। अशोकः कुसुमं न दर्शयति। अयं खलु पुनरुत्तम्भित एव। स॰ पाठान्तरे न पुष्पयति फलत्येव। स॰ न विकाशते किन्तु फलति फलिष्यतीत्यर्थः।

(३) विदूषक.। किमन्यत्? जङ्घावलमेव स॰। अधिकपाठे शरणम्।

(४) इरावती। साधु बकुलावलिके! साधूपक्रान्तमिदानीम्। कुरु सफलप्रार्थनमार्य्यपुत्रम्।

(५) उभे। प्रसीदतु भट्टिनी। के आवां भर्तुः प्रणयपरिग्रहस्य।

इरा । अविस्ससणीआ पुरीसा । अत्तणो वञ्चणवअणं माणीकरिअ अहिक्खित्ताए पिअघरिणीए हिअअसल्लं किदम् । एव्वं ण विणादं मए वाहजण-[गीदि] गिहीदचित्ताए अविसङ्किदाए हरिणीए विअ विणासोत्ति । (१)

विदू । जनान्तिकम् । भो पडिवज्जेहि किंपि उत्तरं । किं ण भणइ "उदकान्दमूले विमहिले विमहिदेण कुम्भीलेण सन्धिच्छेदो णिकिखदव्वोत्ति" वत्तव्वं होइ । (२)

राजा । सुन्दरि ! न मे मालविकया कश्चिदर्थः । मया त्वं चिरयसीति यथा कथञ्चिदात्मा विनोदितः ।

इरा । अविस्ससणीओसि । ण मए विणादं ईरिसं

---

(१) इरावती । अविश्वसनीयाः पुरुषाः । आत्मनो वञ्चनवचनं प्रमाणीकृत्याधिक्षिप्तायाः प्रियगृहिण्याः हृदयशल्यं कृतम् । एवं न विज्ञातं मया, व्याधजन-[गीति] गृहीतचित्ताया अविशङ्किताया हरिण्या इव विनाश इति । स०

(२) विदूषकः । भो प्रतिपद्यस्व किमप्युत्तरम् । किं न भणति "उदकान्तमूले विपथिके विमथितेन कुम्भीलेन सन्धिच्छेदः णिक्षितव्य" इति वक्तव्यं भवति । स० उदान्तमूले जलसमीपे विपथिके पथिशून्ये विमथितेन रुद्धीतेन कुम्भीलकेन चौरेण सन्धिच्छेदः सन्धिच्छेदन व्यापारः णिक्षितव्यः अभ्यसितव्य इत्येव मयात्र सन्धिः कृतः नापहरणेच्छया इति किं भणति अपि तु भणत्येव इत्येवं वक्तव्यं किञ्चित् कथनीयं भवति ।

विणोदवुत्तन्तं अज्जउत्तेण उवलद्धं त्ति। अणहा दुक्खव्वावा-रिणी एव्वं ण करेमि। (१)

विदू। मा दाव अत्तभोदो दक्खिणस्स उवरोहं करे हि समीववदिट्ठेण देवीए परिवारिदत्थिआअणेण संकहावि जइ वारीअदि एत्थ तुमं एव्व पमाणं। (२)

इरा। णं संकहा णाम होदु किंत्ति अत्ताणं आआस-इस्सं (३) इति इष्टा प्रस्थिता।

राजा। अनुसरन्। प्रसीदतु भवती।

इरावती रसनासंदानितचरणा (४) व्रजत्येव।

राजा। सुन्दरि! न शोभते प्रणयिजने निरपेक्षता।

इरा। सठ! अविस्ससणीओसि। (५)

---

(१) इरावती। अविश्वसनीयोऽसि। न मया विज्ञातमीदृशो वि-नोदवृत्तान्त आर्य्यपुत्रेणोपलब्धः इति। अन्यथा दुःखव्यापारिण्येवं न करोमि।

(२) विदूषकः। मा तावत्तत्रभवतो दाक्षिण्यस्योपरोधं कुरु समीप-वर्त्तेन देव्याः परिवारिस्त्रीजनेन संकथापि यदि वार्य्यते अत्र त्वमेव प्रमाणम् स०। तत्रभवतः राज्ञः दाक्षिण्यस्य सर्व्वभार्य्यायाम् अनुकूलत्वस्य अत्र एतद्वारणनिमित्तदोषे त्वं प्रमाणं दोषास्पदमित्यर्थः।

(३) इरावती। ननु संकथा नाम भवतु किमित्यात्मानमायासयि-ष्यामि।

(४) रसनासंदानितचरणा काञ्चीबद्धपादा।

(५) इरावती। शठ! अविश्वसनीयोऽसि। स०

राजा ।

शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये ! ।
चरणपतितया न चण्डि ! तां
विसृजसि मेखलयापि याचिता ॥ (१)

इरा । इअं पि हदासा तुमं एव्व अणुसरदि । (२)

रसनामादाय राजानं ताड़यितुमिच्छति ।

राजा । वयस्य ! एषेरावती ।

बाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादप्युपेक्षाच्युतेन ।
चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥ (३)

---

(१) हे प्रिये ! परिचयवति मयि तावत् शठः धूर्त्तनायक इत्येवं रूपकथनरूपा अवधीरणा तिरस्कारोऽस्तु चरणपतितमेखलया रसनया तु सखीरूपयेति ध्वनिः याचितापि हे चण्डि ! कोपने ! तामवधीरणां न विसृजसि तथाच सखीयाचनेन कोपत्यागस्योचितत्वेन कोपाभावे च अवधीरणात्यागो युक्त एव तत् न करोषीत्यनुचितमिति भावः ।

(२) इरावती । इयमपि हताशा त्वामेवानुसरति । स०

(३) बाष्प आसार इव यस्याः श्रोणीबिम्बात् प्रशस्तनितम्बस्थानात् उपेक्षया असावधानेनैव च्युतेन गलितेन विद्युद्दाम्ना विद्युन्मालयेव हेमकाञ्चीगुणेन स्वर्णरसनया चण्डम् उग्रं मेघराजीव मेघमालेव इयं चण्डी कोपना विन्ध्यं पर्व्वतमिव मां हन्तुमभ्युद्यता उद्युक्ता ।

इरा। किं एव्वं भूओवि मं अवधीरिदं करेहि। (१)

राजा। सरसमं कृतमवलम्बयति।

अपराधिनि मयि दण्डं संहरसि समुद्यतं कुटिलकेशि!।
वर्धयसि विलसितं त्वं दासजनायात्र कुप्यसि च॥ (२)

नूनमिदानीमनुज्ञातम्। इति पादयोः पतति।

इरा। ण क्खु इमे मालविआए चलणा जे दे विसेसेण दोहलं पूरयिस्सन्ति। (३) इति निष्क्रान्ता सचेटी।

विदू। उट्ठेहि अकिदप्पसादोसि। (४)

राजा। उत्थायेरवतीमपश्यन्। तत् कथं गतैव प्रिया?।

विदू। वअस्स! देव्वेहिं इमस्स अविणअस्स अपसारइदा। अहं सिग्घं अपक्कमाम जाव अङ्गारकरासिं विअ अणुचक्कं ण करेदि। (५)

---

(१) इरावती। किमेवं भूयोऽपि मामवधीरितां करोषि। स॰

(२) हे कुटिलकेशि! अपराधिनि मयि उद्यतं दण्डं रसनाताडनरूपं संहरसि अतएव विलसितं विलासविशेषं त्वं वर्द्धयसि दासजनाय मह्यं कुप्यसि च।

(३) इरावती। न खल्विमौ मालविकायाश्चरणौ यौ ते विशेषेण दोहदं पूरयिष्यतः। स॰

(४) विदूषकः। उत्तिष्ठाकृतप्रसादोऽसि।

(५) विदूषकः। वयस्य! दैवैः अस्य अविनयस्य अपसारिता अहं शीघ्रम् अपक्रमामि यावत् अङ्गारराशिमिव अनुचक्रं न करोति। स॰

राजा । अहो मदनस्य वैषम्यम् ।

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनं सेवाम् ।
एवं प्रणयवती सा न हि शक्यमुपेक्षितुं कुपिता ॥ (१)

तदेहि कुपितां देवीं प्रसादयावः ।

इति निष्क्रान्ताः सर्वे ।

इति तृतीयोऽङ्कः ।

---

(१) प्रियायाम् आहितम् अर्पितं मनो येन तादृशोऽहं प्रणिपातं लङ्घयति स्म । तदतिक्रामिणीं प्रसादनविशेषं प्रणामाधिकामिति यावत् सेवां मन्ये तादृशी सेवैव प्रसादनायालं नान्येत्यर्थः । सा हि कुपितापि मयि प्रणयवती अतः उपेक्षितुं तस्याः प्रसादनमिति शेषः न शक्यम् ।

# चतुर्थोऽङ्कः।



ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च।

राजा। आत्मगतम्।

तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलः
संप्राप्तायां नयनविषयं रूढ़रागप्रवालः।
हस्तस्पर्शैः कुसुमित इव व्यक्तरोमोद्गमत्वात्
कुर्यात् कान्तं मनसिजतरुर्मां रसज्ञं फलस्य॥ (१)

प्रकाशम्। सखे! गौतम!

प्रती। जेदु जेदु भट्टा। असण्णिहिदो गोदमो। (२)

---

(१) मनसिजतरुः कामवृक्षः श्रुतिपथगतां श्रवणातिथिं श्रुतामिति यावत् तां मालविकाम् आश्रित्य अवलम्ब्य आशया बद्धमूलः, नयनविषयं नेत्रगोचरत्वं संप्राप्तायां दृष्टायामिति यावत् तस्यां रूढ़रागप्रवालः रूढ़ः जातः रागरूपः प्रवालो यस्य। तादृशोऽभवदिति शेषः हस्तस्पर्शैः कुसुमित इव तत्र हेतुः व्यक्तरोमोद्गमत्वात् स्फुटरोमाञ्चवत्त्वात् तथा च रोमाञ्चस्याङ्कुरायमाणतया पुष्पिततरुतुल्यो जातम् इदानीं च मनसिजतरुः कामवृक्षः मां फलस्य कान्तं रसज्ञं कुर्यात् इत्याशंसायां लिङ्।

(२) प्रतीहारी। जयतु जयतु भर्ता। असंनिहितो गौतमः।

राजा । आत्मगतम् । आः ! मालविकावृत्तान्तज्ञानाय मया प्रेषितः ।

प्रविश्य विदूषकः ।

विदू । जेदु जेदु भवम् । (१)

राजा । जयसेने ! जानीहि तावत् । क्वासौ देवी धारिणी सरुजचरणत्वाद्विनोद्यत इति ।

प्रती । जं देवो आणवेदि । (२) इति निष्क्रान्ता ।

राजा । गौतम ! को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ।

विदू । यो विड़ालगिहीदाए परहुदिआए । (३)

राजा । सविषादम् । कथमिव ।

विदू । सा क्खु तवस्सिणी ताए पिङ्गलक्खीए सारभण्डगेहमुहे परिक्खित्ता । (४)

राजा । ननु मत्संपर्कमुपलभ्य ।

विदू । अध किं । (५)

---

(१) विदूषकः । जयतु जयतु भवान् । स०

(२) प्रतीहारी । यद्देव आज्ञापयति । स०

(३) विदूषकः । यो विडालगृहीतायाः परभृतिकायाः । स० स इत्यर्थात् वृत्तान्तोऽनुकृष्यते: विमर्द्दनरूपो वृत्तान्तो जात इत्यर्थः ।

(४) विदूषकः । सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डगेहमुखे परिक्षिप्ता स० । सारभाण्डस्य प्रधानधनादेर्गृहं तत् स्थितियोग्यभवनं पातालस्थितभवनं तस्य मुखे परिक्षिप्ता ।

(५) विदूषकः । अथ किम् । स० भवत्सम्पर्कमुपेत्यैव तथाभूतेत्यर्थः ।

राजा । क एवं विमुखोऽस्माकं येन षण्डीकृता देवी ।

विदू । सुणादु भवम् । परिव्वाजिआ मे कहेदि । भो र्हिओ किल तत्तभोदी इरावदी रुजाअन्तचलणां देविं सुहं पुच्छिदुं आअदा । (१)

राजा । ततस्ततः ।

विदू । तदो सा देवीए पुच्छिदा । किं अत्तणोवि अणलं किदो हिअअजणो वल्लहोत्ति । तदो ताए उत्तम्मन्तीए मन्तिदम् । कुदो वा उवआरो जं परिअणे संकन्तं वल्लहत्तणं जाणिस्सदित्ति । (२)

राजा । अहो निर्वेदादृते मालविकायामयमुपन्यासः शङ्कयति । (३)

---

(१) विदूषकः । शृणोतु भवान् । परिव्राजिका मे कथयति । भो ह्यः किल तत्रभवतीरावती रुजायमानचरणां देवीं सुखं प्रष्टुमागता । स०

(२) विदूषकः । ततः सा देव्या पृष्टा । किमात्मनोऽप्यनलंकृतो हृदयजनो वल्लभ इति । ततस्तयोत्ताम्यन्त्या मन्त्रितम् । कुतो वोपचारः यत्परिजने संक्रान्तं वल्लभत्वं ज्ञास्यतीति स० हृदयजनः हृदयप्रियजनः अनलङ्कृतः आत्मनोऽपि वल्लभो भवति तथाच कथं नालङ्कृतासीति प्रश्नार्थः । उत्ताम्यन्त्या खिद्यन्त्या । उपचारः भूषादि ।

(३) निर्वेदादृते सन्तोषं विना असन्तोषहेतुकः इति यावत् अयमिरावत्युक्त उपन्यासः मालविकायाः "[illegible]" मालविकाविषयं शङ्कयति सन्देहमुत्पादयति ।

विदू। तदो ताए अणुबन्धिज्जमाणाए भवदो अविणअं अन्तरेण परि गदत्था किदा (१)

राजा। अहो दीर्घरोषता तत्रभवत्याः। अतः परं कथय।

विदू। किं अवरम्। मालविआ बउलावलिआ अ णिग लपदीओ। अदिट्ठसुज्जपाआ पाआलवासं णागकणआ विअ अणुहवन्ति। (२)

राजा। कष्टं कष्टम्।

मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते॥ (३)

अपयन कस्यचिदुपक्रमस्य गतिः स्यात्।

---

(१) विदूषकः। ततस्तयानुबध्यमानया भवतोऽविनयमन्तरेण परिगतार्था कृता। स० तया दूरावस्था अनुबध्यमानया देव्यैव निर्बन्धातिशयेन पृष्टया तव अविनयं मालविकानुरक्तत्वरूपमसदाचारमन्तरेण विना परिवर्ज्जयित्वा गृहीतार्था विदितवृत्तान्ता देवी कृता तथाच भवदविनय-एव अलङ्काराभावे कारणमिति ज्ञापितमित्यर्थः।

(२) विदूषकः। किमपरम्। मालविका बकुलावलिका च निगडपद्या-यदृष्टसूर्य्यपादे पातालवासं नागकन्यके इवानुभवतः। स०

(३) मधुरस्वरा मधुरनादा परभृता कोकिला भ्रमरी च तत्तुल्ये मालविका बकुलावलिकेत्यर्थात् विबुद्धचूतसङ्गिन्यौ विकशितसहकारसक्ते मदाश्रिते इति ध्वनिः। प्रबलपुरोवातया वृष्ट्या कोटरं वृक्षकोटरं तत्तुल्यं निविडान्धकारमिति ध्वनिः गमिते।

विदू । कधं भविस्सदि । जं सारभाण्डगिहव्वावारिद-माहविआ देवीए संदिट्ठा । मम अङ्गुलीअमुद्दिअं अदेक्खिअ ण मोत्तव्वा तुए हदासा मालविआ बउलावलिआ चेत्ति । (१)

राजा । निःश्वस्य सपरामर्शम् । सखे ! किमत्र कर्तव्यम् ।

विदू । विचिन्त्य । अत्थि एत्थ उवाओ । (२)

राजा । क इव ।

विदू । सदृष्टिक्षेपम् । कोवि अदिट्ठो सुणिस्सदि । कण्णे दे कहेमि । उपश्लिष्य । एव्वं विअ । (३) इत्यावेदयति ।

राजा । सहर्षम् । अनुष्ठेयं प्रयुज्यतां सिद्धये ।

प्रविश्य प्रतिहारी ।

प्रति । देव ! पवादसअणे देवी ! णिसण्णा रत्तचन्दणवारिणा परिअणहत्थगदेण चन्दणेण भअवदीए विणोदीअमाणा कहाहिं चिट्ठदि । (४)

---

(१) विदूषकः । कथं भविष्यति । यत्सारभाण्डगृहव्यापारिता माधविका देव्या संदिष्टा । ममाङ्गुलीयमुद्रिकामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका बकुलावलिका चेति । स०

(२) विदूषकः । अस्त्यत्रोपायः । स०

(३) विदूषकः । कोऽप्यदृष्टः शृणोति । कर्णे ते कथयामि । एवमिव । स० सर्पदंशनव्याजेन विषहारकर्मणियुक्तां देवीमुद्रां गृहीत्वा मोचयिष्यामीति कथितं तस्मात्तुपदं व्यक्तीभविष्यति ।

(४) प्रतीहारी । देव ! प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चन्दनेन भगवत्याविनोद्यमाना कथाभिस्तिष्ठति । स०

राजा । तस्मादस्मत्प्रार्थनायोग्योऽयमवसरः ।

विदू । भो गच्छदु भवम् । अहंपि देविं पेक्खिदुं अरित्तपाणी [सज्जो] हुविस्सम् । (१)

राजा । जयसेनायास्तावत्संविदितं गच्छ ।

विदू । तह । कर्णे । एव्वं विअ होदि । (२) इति निष्क्रान्तः ।

राजा । जयसेने ! प्रवातशयनमार्गमादेशय ।

प्रति । इदो इदो देवो । (३)

ततः प्रविशति शयनस्था देवी परिव्राजिका
विभवतश्च परिवारः ।

देवी । भअवदि ! रमणीआ कहा । तदो तदो । (४)

परि । सदृष्टिक्षेपम् । अतःपरं पुनः कथयिष्यामि अत्रभवान् विदिशेश्वरः प्राप्तः ।

देवी । अम्मो भट्टा । (५) इत्युत्थातुमिच्छति ।

राजा । अलमलमुपचारयन्त्रणया ।

---

(१) विदूषकः । भो गच्छतु भवान् । अहमपि देवीं प्रेक्षितुमरिक्तपाणिः [संज्ञो] भविष्यामि । स०

(२) विदूषकः । तथा । एवमिव भवति । स० । उद्याने सर्पदंशनं सम्भविष्यतीति तत्र गम्यमिति कर्णे कथितमित्यर्थः ।

(३) प्रतीहारी । इत इतो देवः । स०

(४) देवी । भगवति ! रमणीया कथा । ततस्ततः । स०

(५) देवी । अहह भर्ता । स०

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि।
चरणं रुजापरीतं कलभाषिणि! मां च पीड़यितुम्॥ (१)

धारि। जेदु जेदु अज्जउत्तो। (२)

परि। विजयतां देवः।

राजा। परिव्राजिकां प्रणम्योपविश्य च। देवि! अपि सह्या वेदना।

धारि। अत्थि मे विसेसो। (३)

ततः प्रविशति यज्ञोपवीतसंवीताङ्गुष्ठः संभ्रान्तो विदूषकः।

विदू। परित्ताअदु परित्ताअदु भवम्। सप्पेणह्मि दट्ठो। (४)

सर्वे विषण्णाः।

राजा। कष्टं कष्टम्। क्व भवान् परिभ्रान्तः।

विदू। देवीं देक्खिस्संत्ति आआरपुप्फकारणादो पमदवणं गदोह्मि। (५)

---

(१) अनुचितनूपुरविरहं सततपरिचितनूपुरसङ्गमित्यर्थः। रुजापरीतं रोगव्याप्तं चरणं तद्दर्शनेन रोगाक्रान्तं माञ्च पीड़यितुं नार्हसि।

(२) धारिणी। जयति जयत्वार्य्यपुत्रः। स०

(३) धारिणी। अस्ति मे विशेषः। स०

(४) विदूषकः। परित्रायतां परित्रायतां भवान्। सर्पेणास्मि दष्टः। स०

(५) विदूषकः। देवीं द्रक्ष्यामीत्याचारपुष्पकारणात्प्रमदवनं गतोऽस्मि। स०

धारि। हद्धी हद्धी अहं ज्जेव्व जीविदसंसअणिमित्तं जादा बह्मणस्स। (१)

विदू। तहिं असोअत्थपुप्फकारणादो पसारिदो दक्खिणहत्थो। तदो कोडरविणिग्गदेन सप्पच्छविणा कालेण दंसिदोह्मि। णं एदाणि दुवे दंसणपदाणि। (२) इति दर्शयति।

परिव्राजिका।

छेदो दंशस्य दाहो वा क्षतस्यारक्तमोचणम्।
एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः॥ (३)

संप्रति विषवैद्यानां कर्म।

राजा। जयसेने! ध्रुवसिद्धिः क्षिप्रमाहूयताम्।

प्रती। जं देवो आणवेदि (४)। इति निष्क्रान्ता।

---

(१) धारिणी। हा धिक् हा धिगहमेव जीवितसंशयनिमित्तं जाता ब्राह्मणस्य। स०

(२) विदूषकः। तस्मिन्नशोकस्यपुष्पकारणात्प्रसारितो दक्षिणहस्तः। ततः कोटरविनिर्गतेन सर्पच्छपिणा कालेन दंशितोऽस्मि। नन्वेते द्वे दंशनपदे। स०

(३) दंश्यतेऽत्र दंशो दंशाधाराङ्गम् तस्य च्छेदः खण्डनं दाहो वा क्षतस्य क्षताधारस्य आरक्तमोचणम् सम्यक्शोणितनिस्सारणं वा। एतानि छेददाहरक्तमोचणानि दष्टमात्राणामायुष्या आयुषे हिताः प्रतिपत्तय उपायाः।

(४) प्रतीहारी। यद्देव आज्ञापयति। स०

विदू। अहो पावेण मिच्चुणा गिहीदोह्मि। (१)

राजा। मा कातरो भूः। अविषोऽपि कदाचिद्दंशो भवेत्।

विदू। कहं ण भाइस्सम्। सिमिसिमाअन्ति मे अङ्गाइम्। (२) इति। विषवेगं रूपयति।

धारि। हा हा दंसिदं विआरेण अवलम्बध अज्जाणम्। (३)

परिव्राजिका ससंभ्रममवलम्बते।

विदू। राजानमवलोक्य। भो बालपिअवअस्सोह्मि तुए। अविआरेण अपुत्ताए जणणीए जोगक्खेमं वहेहि। (४)

राजा। मा भैषीः। अचिरात् त्वां वैद्यश्चिकित्सिष्यति। स्थिरो भव।

प्रविश्य जयसेना।

जय। आणविदो धुवसिद्धी विण्णवेदि। इहज्जेव्व गोदमो आणीअदुत्ति। (५)

---

(१) विदूषकः। अहो पापेन मृत्युना गृहीतोऽस्मि। स०

(२) विदूषकः। कथं न भेष्यामि। सेक्षोयन्ते मेऽङ्गानि। स०

(३) धारिणी। हा! हा! दर्शितं विकारेणावलम्बध्वमेनम्। स०

(४) विदूषकः। भो बालप्रियवयस्योऽस्मि ते। अविकारेणापुत्रायै जनन्यै योगक्षेमं वह। स० बाल्यावधिप्रियवयस्यः बालप्रियवयस्यः अविकारेण मम मार्येऽपि प्रेषितस्याभावेन मदनुरोधादेवेत्यर्थः।

(५) जयसेना। आज्ञप्तो ध्रुवसिद्धिर्विज्ञापयति। इहैव गौतम आनीयतामिति। स०

राजा । तेन हि वर्षवर(१)प्रतिगृहीतमेव तत्रभवतः सकाशं प्रापय ।

जय । तहा । (२)

विदू । देवीं विलोक्य । भोदि ! जीवेअं ण वा जं मए तत्तभवन्तं सेवमाणेण दे अवरद्धं तं मरिसेहि । (३)

धारि । दीहाउसो होहि । (४)

निष्क्रान्तो विदूषकः प्रतीहारी च ।

राजा । प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धेरपि यथार्थनाम्नः सिद्धिं न मन्यते ।

प्रविश्य जयसेना ।

जेदु जेदु भट्टा । धुवसिद्धी विण्णवेदी । उदकुम्भविधाणेण सप्पमुद्दिआ कप्पिदव्वा । ता अण्णेसीअदुत्ति । (५)

धारि । एदं सप्पमुद्दअं अङ्गुलीअअम् । पच्छा मह हत्थे देहि णम् । (६)

---

(१) वर्षवरेण कञ्चुकिना प्रतिगृहीतम् अवलम्बितमेनं गौतमं तत्रभवतः ध्रुवसिद्धेः सकाशं समीपं प्रापयेत्यन्वयः ।

(२) जयसेना । तथा । स० अस्त्विति शेषः ।

(३) विदूषकः । भवति ! जीवेयं न वा । यन्मया तत्रभवन्तं सेवमानेन तेऽपराद्धं तन्मर्षयस्व । स०

(४) धारिणी । दीर्घायुर्भव ।

(५) जयसेना । जयति जयति भर्ता । ध्रुवसिद्धिर्विज्ञापयति । उदकुम्भविधानेन सर्पमुद्रिका कल्पितव्या तदन्विष्यतामिति । स०

(६) धारिणी । एतत्सर्पमुद्रिकमंगुलीयकम् । पश्चान्मम हस्ते देह्येतत् । स०

राजा । जयसेने ! कर्मसिद्धावाशु प्रतिपत्तिमानय । (१)

जय । जं देवो आणवेदि (२) । इति निष्क्रान्ता ।

परि । यथा हृदयमाचष्टे तथा निर्विषो गौतमः ।

राजा । भूयादेवम् ।

प्रविश्य जयसेना ।

जय । जेदु जेदु भट्टा । णिव्वुत्तविसवेगो गोदमो मुहुत्तेण पकिदित्थो संवुत्तो । (३)

धारि । दिट्ठिआ वचणीआदो मुत्तम्हि । (४)

प्रती । एसो उण वाहतओ अमच्चो विण्णवेदि । राअकज्जं बहु मन्तिदव्वम् । दंसणेन अणुग्गहं इच्छामि त्ति । (५)

धारि । गच्छदु अज्जउत्तो कज्जसिद्धीए । (६)

राजा । देवि ! आतपाक्रान्तोऽयमुद्देशः । शीतक्रिया चास्या रुजः प्रशस्ता । तदन्यत्र नीयतां शयनीयम् ।

---

(१) प्रतिपत्तिं यथायोग्यस्थानप्रापणं राज्ञीसमीपमेव आशु शीघ्रमानयेत्यर्थः ।

(२) जयसेना । यद्देव आज्ञापयति । स०

(३) जयसेना । जयति जयति भर्ता । निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः । स०

(४) धारिणी । दिष्ट्या वाच्यान्मुक्तास्मि स० । वाच्यादपवादात् ।

(५) प्रतीहारी । एष पुनर्वाहतकोऽमात्यो विज्ञापयति । राजकार्य्यं बहु मन्त्रितव्यम् दर्शनेनानुग्रहमिच्छामीति । स०

(६) धारिणी । गच्छत्वार्य्यपुत्रः कार्य्यसिद्धये । स०

धारि । पालिआ अज्जउत्तवअणं अणुचिट्ठध । (१)

परिजनस्तथा प्रक्रान्तः ।

निष्क्रान्ता देवी परिव्राजिका परिजनश्च ।

राजा । जयसेने ! गूढेन पथा प्रमदवनं प्रापय ।

जय । एदु एदु देवो । (२)

राजा । जयसेने ! ननु समाप्तकाम्यो गौतमः ? ।

जय । अध इं ? । (३)

राजा ।

दृष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।
सन्दिग्धमेव सिद्धौ कातरमाशङ्कते चेतः ॥ (४)

प्रविश्य विदूषकः ।

विदू । जेदु जेदु भवम् । सिद्धाणि दे मङ्गलकम्माणि । (५)

राजा । जयसेने ! त्वमपि नियोगमशून्यं कुरु ।

---

(१) धारिणी । पालिताः ! आर्यपुत्रवचनमनुतिष्ठत । स० पालिताः दासः ।

(२) जयसेना । एत्वेतु देवः । स०

(३) जयसेना । अथ किम् ? । स०

(४) दृष्टस्याधिगमे प्राप्तौ निमित्तं कारणम् एकान्तसाध्यम् निस्सन्देहेन सम्भवदुत्पत्तिकसाध्यकमेवंरूपमपि प्रयुज्यते इति प्रयोगः उपायस्तं सिद्धौः साध्यनिष्पादनाय सन्दिग्धमेव कार्य्यं स्यान्न वेति कृतसन्देहं मत्वा चेतः कातरं यथा तथा आशङ्कते बिभेति ।

(५) विदूषकः । जयति जयति भवान् । सिद्धानि ते मङ्गलकर्माणि । स०

जय । जं देवो आणवेदि । (१) इति निष्क्रान्ता ।

राजा । गौतम ! क्षुद्रा माधविका न खलु किंचिद्विचारितमनया ।

विदू । देवीए अङ्गुलीअमुद्दिअं देक्खिअ कहं विआरेदि । (२)

राजा । न खलु मुद्रामधिकृत्य ब्रवीमि । तयोर्द्वयोः किंनिमित्तो मोक्षः किं वा देव्या परिजनमतिक्रम्य भवान् संदिष्ट इत्येव तया प्रष्टव्यम् ।

विदू । णं पुच्छिदोह्मि । मन्दस्सवि पुणो मे तह पच्चुप्पणं उत्तरं आसि । (३)

राजा । कथ्यताम् ।

विदू । भणिदं मए । देव्वचिन्तएहिं विण्णाविदो राआ सोवसग्गं वो णक्खत्तम् । ता अवस्सं सव्वबन्धमोक्खो करीअदुत्ति । (४)

राजा । सहर्षम् । ततस्ततः ।

---

(१) जयसेना । यद्देव आज्ञापयति । स०

(२) विदूषकः । देव्या अङ्गुलीयमुद्रिकां दृष्ट्वा कथं विचारयति । स०

(३) विदूषकः । ननु पृष्टोऽस्मि । मन्दस्यापि पुनर्मे तथा प्रत्युत्पन्नमुत्तरमासीत् । स०

(४) विदूषकः । भणितं मया । दैवचिन्तकैर्विज्ञप्तो राजा सोपसर्गं वो नक्षत्रम् । तदवश्यं सर्वबन्धमोक्षः क्रियतामिति । स० उपसर्गेण ज्योतिर्मोक्तक्रूरग्रहवेधसूचितदैवोपद्रवेण सहितमित्यर्थः ।

विदू । तं सुणिअ देवीए इरावदीए चित्तं रक्खन्तीए "राआ किल मोअअदि त्ति" अहं संदिट्ठोत्ति । तदो युज्जदि त्ति ताए सम्वादिदो अत्थो । (१)

राजा । विदूषकं परिष्वज्य । सखे ! प्रियोऽहं खलु तव ।

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥ (२)

विदू । तुवरदु भवम् । समुद्दगेहके सहीसहिदं मालविअं ठाविअ भवन्तं पच्चुग्गदोह्मि । (३)

राजा । अहमेनां संभावयामि । गच्छाग्रतः ।

विदू । एदु एदु भवम् । परिक्रम्य । एदं समुद्दगेहकम् । (४)

राजा । साशङ्कम् । वयस्य एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते इरावत्याः परिचारिका चन्द्रिका संनिकृष्टमागच्छति । इतस्तावदावां भित्तिगूढौ भवावः ।

---

(१) विदूषकः । तत् श्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या "राजा किल मोचयति" इत्यहं संदिष्ट इति । ततो युज्यत इति तया संवादितोऽर्थः । स०

(२) सुहृदां बुद्धिगुणेनैव अर्थदर्शनं न किन्तु स्नेहेनैव सूक्ष्मः हठादनुद्भावनीयः कार्यसिद्धिपथः अभीष्टसिद्धेरुपाय उपलभ्यते उद्भाव्यते इत्यर्थः ।

(३) विदूषकः । त्वरतां भवान् । समुद्रगृहके सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि । स०

(४) विदूषकः । एत्वेतु भवान् । एतत्समुद्रगृहकम् । स०

विदू। अहो कुम्भीलएहिं कामुएहिं च परिहरणीआ चन्दिआ। (१)

उभौ यथासमर्थितं कुरुतः।

राजा। कथं नु ते सखी मां प्रतिपालयति। एह्येनां गवाक्षमाश्रित्य यावदवलोकयामि।

विदू। तहा। (२)

उभौ विलोकयन्तौ स्थितौ।

ततः प्रविशति मालविका बकुलावलिका च।

बकुला। सहि पणाम भट्टारं। (३)

माल। णमो दे जो पासदो पिटठदो पेक्खीअदि। (४)

राजा। शङ्के मे प्रतिकृतिं निर्द्दिशति।

माल। सहर्षं द्वारमवलोक्य। हला म विप्पलम्भेसि। (५)

राजा। हर्षविषादाभ्यामत्रभवत्याः प्रीतोऽस्मि।

---

(१) विदूषकः। अहो कुम्भीलकैः कामुकैश्च परिहरणीया चन्द्रिका। स०। कुम्भीलकैश्चौरैः।

(२) विदूषकः। तथा। स० अस्त्विति शेषः।

(३) बकुलावलिका। सखि! प्रणम भर्तारम्। स०

(४) मालविका। नमो ते यः पार्श्वतः पृष्ठतश्च दृश्यते। स० सर्व्वदानुचिन्त्यमानत्वात् यत्र दृष्टिर्दीयते तत्रैव भवान् दृश्यते इत्यर्थः।

(५) मालविका। हला मां विप्रलभसे। स० तदागमनबुद्ध्या हर्षः तददर्शने विलम्बात् विषादः।

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे । (१)

बकुला । णं एस चित्तगदो भट्टा चिट्ठदि । (२)

उभे । प्रणिपत्य । जेदु जेदु भट्टा । (३)

माल । तहिं संभमे ठिदा भट्टिणो रूवस्स ण तह वितिण्हह्मि जह अज्ज मए भाविदो अवितिण्हदंसणो भट्टा । (४)

विदू । सुदं भवदा । सं किं अत्तभोदी तुए जह दिट्टा तह ण दिट्टो भवम् । मुधा दाणिं मञ्जूसाविअ रअणभाण्डं जोव्वणगव्वं वहेसि । (५)

राजा । सखे ! कुतूहलवानपि निसर्गशालीनः स्त्रीजनः । (६) पश्य—

---

(१) पुण्डरीकस्य पद्मस्य सूर्योदये याऽवस्था विकासरूपा सूर्यास्तमये च या सङ्कोचरूपाऽवस्था भवति ते विकाससङ्कोचात्मिके द्वे समवस्थे सम्यगवस्थे सुवदनाया मालविकायाः वदनेन क्षणादूढे धृते ।

(२) बकुलावलिका । नन्वेष चित्रगतो भर्ता । स०

(३) उभे । जयति जयति भर्ता । स०

(४) मालविका । तस्मिन् संभ्रमे स्थिता भर्तृरूपस्य न तथा वितृष्णास्मि यथाद्य मया भावितोऽवितृष्णदर्शनो भर्ता । स० भावितः दर्शनानन्तरं चिन्तितः ।

(५) विदूषकः । श्रुतं भवता । ननु किमत्रभवती त्वया यथा दृष्टा तथा न दृष्टो भवान् । मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि । स०

(६) निसर्गेण स्वभावेन शालीनः सलज्जः ।

कार्त्स्न्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्व्वसमागमानाम्।
न तु प्रियेष्वायतलोचनानाम्
समग्रवृत्तीनि विलोचनानि। (१)

माल। हला का एसा पासपरिवत्तिदवश्रणेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाअदि। (२)

बकुला। णं इअं पासगदा इरावदी। (३)

माल। सहि! अदक्खिणो विअ मे भट्टा पडिभादि जो सव्वं देवीअणं उज्झिअ एक्काए मुहे बद्धलक्खो। (४)

बकुला। आत्मगतम्। चित्तगदं भट्टारं परमत्यदो मंक-

---

(१) प्रियेषु अभीष्टेषु तद्दर्शनायेत्यर्थः। आयतलोचनानां व्यापारितनेत्राणां स्त्रीणामिति शेषः। विलोचनानि नेत्राणि तत्पूर्व्वसमागमानां तैः नेत्रैः पूर्व्वं समागमो येषां कृतप्रथमदर्शनानां प्रियाणामित्यर्थः। रूपं लावण्यं कार्त्स्न्येन समग्रवृत्त्या निर्वर्णयितुं द्रष्टुमिच्छन्ति सोत्सुकानि, तु किन्तु समग्रवृत्तीनि सम्पूर्णव्यापारवन्ति न भवन्तीति शेषः। दृष्टविषयदर्शने औत्सुक्ये सत्यपि समग्रतया स्त्रियो न पश्यन्ति लज्जाशीलत्वादिति भावः।

(२) मालविका। हला कैषा पार्श्वपरिवर्त्तितवदनेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते। स०

(३) बकुलावलिका। नन्वियं पार्श्वगतेरावती। स०

(४) मालविका। सखि! अदक्षिण इव मे भर्त्ता प्रतिभाति यः सर्व्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्षः। स०

प्पिअं असूदस्सदि । भोदु कीलइस्सं दाव एदाए ॥ प्रकाशम् । हला भट्टिणो वल्लहा एसा । (१)

माल । तदो किं दाणिं अत्ताणं आआसिअ । (२) इति सासूयं परावर्त्तते ।

राजा । सखे ! पश्य पश्य ।

भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
सासूयमाननमितः परिवर्त्तयन्त्या ।
कान्तापराधकुपितेष्वनया विनेतुः
संदर्शितेव ललिताभिनयस्य शिक्षा ॥ (३)

विदू । अणुणअसज्जो दाणिं होहि । (४)

माल । अज्जगोदमो एत्थ एव्व सेवदि णम् । (५) इति पुनः स्थानान्तराभिमुखी भवितुमिच्छति ।

---

(१) बकुलावलिका । चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयिष्यति । भवतु क्रीड़यिष्यामि तावदेतया । हला भर्तुर्वल्लभैषा । स०

(२) मालविका । ततः किमिदानीमात्मानमायासे । स०

(३) विनेतुः शिक्षकस्य गणदासस्य कर्त्तरि षष्ठी । कान्तापराधकुपितेषु कान्तस्य योऽपराधः अन्यस्त्रीसङ्गमादिकृतापराधस्तत्र कुपितेषु कोपेषु भावे क्तः । ललिताभिनयस्य मनोहरस्य कोपव्यञ्जकचेष्टाविशेषस्य कर्म्मणि षष्ठी । शिक्षा उपदेशः अनया मालविकया संदर्शितेव तत्र हेतुगर्भविशेषणम् पूर्व्वार्द्धम् ।

(४) विदूषकः । अनुनयसज्ज इदानीं भव । स०

(५) मालविका । आर्यगौतमः अत्रैव सेवत्येनाम् । स०

बकुला। मालविकां दृष्ट्वा। ण हि ण हि। कुविदा दाणिं तुमम्। (१)

माल। जदि चिरं कुविदं एव्व मं मन्तेसि एस पञ्चाणी अदु कोवो। (२)

राजा। उपेत्य।

कुप्यसि कुवलयनयने! चित्तार्पितचेष्टया कथय किमिदं मे।
ननु तव साक्षादयमहमनन्यसाधारणो दासः॥ (३)

बकुला। जेदु जेदु भट्टा। (४)

माल। आत्मगतम्। कहं चित्तगदो भट्टा मए असुददो। (५)
प्रकाशं सव्रीडवचनमञ्जलिं करोति।

राजा मदनकातर्यं रूपयति।

विदू। किं भवं उदासीणो विअ दिसदि। (६)

---

(१) बकुलावलिका। न हि न हि। कुपितेदानीं त्वम्। स०

(२) मालविका। यदि चिरं कुपितामेव मां मन्त्रयसि एष प्रत्यानीयतां कोपः। स०

(३) हे कुवलयनयने! मे मम चित्तार्पितचेष्टया किं कथं कुप्यसि मह्यमिति शेषः। ननु भो अहं साक्षात् सरूपतः न तु प्रतिमूर्त्या अनन्य-साधारणः अन्यसम्बन्धहीनः एकभक्तिक इत्यर्थः तव दासः। स०

(४) बकुलावलिका। जयति जयति भर्ता। स०

(५) मालविका। कथं चित्रगतो भर्ता मयाभ्युपगतः। स०

(६) विदूषकः। किं भवानुदासीन इव दृश्यते। स०

राजा । अविश्वसनीयत्वात्सख्यास्ते ।

विदू । अत्तभोदीए कहं तव अविस्सासो । (१)

राजा । श्रूयताम् ।

पथि नयनयोः स्थित्वास्थित्वा तिरोभवति क्षणा

त्सरति सहसा बाह्वोर्मध्यं गतापि सखी तव ।

मनसिजरुजाक्लिष्टस्यैवं समागममायया

कथमपि सखे ! विश्रब्धं स्यादिमां प्रति मे मनः ॥ (२)

बकुला । सहि ! बहुसो किल भट्टा विप्पलद्धो । ता अत्ता वीस्ससणीओ करीअदु । (३)

माल । मम उण मन्दभाआए सिविणअसमागमोवि भट्टिणो दुल्लहो आसि । (४)

बकुला । एदु भट्टा देहि से उत्तरम् । (५)

---

(१) विदूषकः । अत्रभवत्याः कथं तवाविश्वासः । स० तवेति कर्तरि षष्ठी । अत्रभवत्या इत्यत्र तु कर्मणि षष्ठीति भेदः ।

(२) उक्तरूपेण बहुशः प्रतारणेन अविश्वासकारणाचरणात् इमां मालविकां प्रति मे मनः कथं विश्रब्धं विश्वस्तं स्यात् अपि तु कथमपि न प्रतारिकायाः प्रतारणावश्यम्भावेन तत्राविश्वासस्यैव युक्तत्वादिति भावः ।

(३) बकुलावलिका । सखि ! बहुशः किल भर्ता विप्रलब्धः । तदात्मा विश्वसनीयः क्रियताम् । स०

(४) मालविका । मम पुनर्मन्दभागायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् । स०

(५) बकुलावलिका । एतु भर्ता देह्यस्या उत्तरम् । स०

राजा । उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ।
तव सख्ये मया दत्तो न सेव्यः सेविता रहः ॥ (१)

बकुला । अणुग्गहीदह्मि । (२)

विदू । परिक्राम्य ससंभ्रमम् । बउलावलिए असोअपल्लवाइं अहिलङ्घदुं इच्छदि हरिणो । एहि णिवारेम णम् । (३)

बकुला । तह । (४) इति प्रस्थिता ।

राजा । एवमेवास्मिन् रक्षणीयेऽविलम्बितेन भवितव्यम् ।

विदू । एव्वंपि गोदमो णिद्दिसदि । (५)

बकुला । अज्ज ! गोदम ! अहं अप्पआसे चिट्ठामि । तुमं दुवाररक्खओ होहि । (६)

---

(१) उत्तरेण किम् उत्तरसाध्यं नास्ति पञ्चबाणएवाग्निस्तापकत्वात् साक्षी यत्र तद्यथा तथा अनेनाग्निसाक्षिकत्वेन दुर्भेद्यता दर्शिता । मया इदानीं आत्मा तव सख्यै मालविकायै दत्तः रहसि निर्जने अस्याः सेविता सेवक एव भविष्यामि न तु सेव्य इत्यर्थः ।

(२) बकुलावलिका । अनुगृहीतास्मि । स०

(३) विदूषकः । बकुलावलिके ! अशोकपल्लवान्यभिलङ्घयितुमिच्छति हरिणः एहि निवारयाव एनम् । स०

(४) बकुलावलिका । तथा । स०

(५) विदूषकः । एवमपि गौतमो निर्दिशति । स० अपिः हेतौ अवश्यरक्षणीयस्य यतो रक्षणमुचितमत इत्यर्थः ।

(६) बकुलावलिका । आर्य ! गौतम ! अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव । स०

विदू । जुज्जदि । (१)

निष्क्रान्ता बकुलावलिका ।

विदू । इमं दाव फटिअत्थम्भं संसिदो भोमि । तथा कृत्वा । अहो सुहप्फरिसदा सिलाविसेसस्स । इति निद्रायते । (२)

मालविका ससाध्वसं तिष्ठति ।

राजा । विसृज सुन्दरि ! संगमसाध्वसं
तव चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥ (३)

माल । देवीभआदो अत्तणोवि पिअं कादुं ण पारेमि । (४)

राजा । न भेतव्यम् भेतव्यम् ।

माल । सोपालम्भम् । जो ण भाअदि सो मए भट्टिणीदंसणे दिट्ठसमत्थो भट्टा । (५)

---

(१) विदूषकः । युज्यते । स०

(२) विदूषकः । इमं तावत् स्फटिकस्तम्भं संश्रितो भवामि । अहो सुखस्पर्शता शिलाविशेषस्य । स०

(३) चिरात्प्रभृति बहुकालावधि तव प्रणयोन्मुखे प्रणयसमुत्सुके सहकारितां सहचरतामाम्रवृक्षत्वञ्च गते मयि त्वम् अतिमुक्तालताचरितं माधवीलतासादृश्यं बन्धनाश्लेषेणेति शेषः परिगृहाण ।

(४) मालविका । देवीभयादात्मनोऽपि प्रियं कर्तुं न पारयामि । स०

(५) मालविका । यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता । स०

राजा ।

दाक्षिण्यं नाम बिम्बोष्ठि ! नायकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ! ये प्राणास्ते त्वदाशानिबन्धनाः ॥ (१)

तदनुगृह्यतां चिरानुरक्तोऽयं जनः । इति संश्लेषमुपजनयति ।

मालविका नाट्येन परिहरति ।

राजा । रमणीयः खलु नवाङ्गनानां मदनविषयावतारः । एषा हि ।

हस्तं कम्पयते रुणद्धि रसनाव्यापारलोलाङ्गुलीः
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥ (२)

---

(१) हे बिम्बोष्ठि ! नाम सम्भावनायां प्रकाशे वा । दाक्षिण्यं सर्वदयितासु आनुकूल्यं नायकानां कुलव्रतम् अवश्यपालनीयनियमः । यद्यपीति शेषः । तत् तथापि ये मम प्राणास्ते त्वदाशानिबन्धना तवाकाङ्क्षापरवशा इत्यर्थः ।

(२) रसनाव्यापारलोलाङ्गुलीः रसनायां व्यापारे तद्ग्रन्थिमोचनरूपचेष्टायां लोलाङ्गुलीः समुत्सुकत्वेन चपलाङ्गुलीः रुणद्धि रोद्धुं लग्नाति । बलात् हठेन आलिङ्ग्यमाना स्वौ हस्तौ स्तनावरणतां स्तनावरकत्वं नयति पक्ष्मलनेत्रमाननं पातुं चुम्बयितुमुन्नमयतः उत्तोलयतो मत्सकाशात् । साचीकरोति वक्रं स्थापयति अतो व्याजेन छलेन मम अभिलाषपूरणसुखम् अभिलाषस्य कामनायाः पूरणेन यत् सुखं तत् निर्वर्तयति निष्पादयत्येव ।

ततः प्रविशतीरावती निपुणिका च ।

इरा । हञ्जे णिउणिए ! सच्चं तुमं परिगतत्था चन्दिआए । समुद्दगेहकालिन्दसइदो अज्जगोदमो दिट्ठोत्ति। (१)

निपु । अण्णहा कहं भट्टिणीए विस्सवीअदि । (२)

इरा । तेन हि तहिं एव्व गच्छह्म संसआदो मुत्तं पिअवअस्सं पुच्छिदुं च । (३)

निपु । सावसेसं विअ भट्टिणीए वअणम्। (४)

इरा । अण्णं च । चित्तगदं अज्जउत्तं पसाददइदुम् । (५)

निपु । अह दाणिं कहं णु भट्टा एव्वं अणुणीअदि [ जइ दाणिं भट्टा पच्चक्खदो अणुणीअदि ता को दोसो । ] (६)

इरा । मुद्धे जारिसो चित्तगदो तारिसो एव्व अण्णसंकन्त-

---

(१) इरावती । चेटि ! निपुणिके ! सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहकालिन्दशयित आर्य्यगोतमो दृष्ट इति । स०

(२) निपुणिका । अन्यथा कथं भट्टिन्या विश्राम्यते । स०

(३) इरावती । तेन हि तत्रैव गच्छाव संशयान्मुक्तं प्रियवयस्यं प्रष्टुं च । स०

(४) निपुणिका । सावशेषमिव भट्टिन्या वचनम् । स० प्रष्टुञ्चेति चकारप्रयोगात् अन्यदपि प्रयोजनमस्तीति वचनस्यावशेषोऽस्तीति गम्यते ।

(५) इरावती । अन्यच्च । चित्रगतमार्य्यपुत्रं प्रसादयितुम् । स०

(६) निपुणिका । अथेदानीं कथं नु भर्त्तैवमनुनीयते । पाठान्तरे यदि भर्त्ता प्रत्यक्षतोऽनुनीयते तत् को दोषः । स०

हिअओ अज्जउत्तो। केवलं उवआरादिक्कमं पमज्जिदुं अअं आरम्भो। (१)

निपु। इदो इदो भट्टिणी। (२)

उभे परिक्रामतः।

प्रविश्य चेटी।

जेदु जेदु भट्टिणी। भट्टिणि! देवी भणादि। ण एसो मह मच्छरस्स कालो तव बड्ढमाणं वड्ढइदुं। इअं वअस्सिआए सह णिअलबन्धणे किदा मालविआ। जइ अणुमण्णेसि अज्जउत्तं पि तव किदे विण्णावइस्सम्। (३)

इरा। णाअरिए! विण्णवेहि देवीम्। काओ वअं भट्टिणीं णिओजेदुं [भट्टिणीणीदिं जेदुं] परिअणाणिग्गहेण मह

---

(१) इरावती। मुग्धे! यादृशश्चित्तगतस्तादृश एवान्यसंक्रान्तहृदय आर्य्यपुत्रः। केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः। स० उपचारस्य मत्सेवनात्मकपादपतनस्य अतिक्रममुल्लङ्घनमित्यर्थः। अन्यसंक्रान्तहृदयस्य साक्षादनुनयकरणायोग्यत्वादेवं क्रियते इति भावः।

(२) निपुणिका। इत इतो भर्त्तृनी।

(३) चेटी। जयति जयति भर्त्तृनी। भर्त्तृनि! देवी भणति। नैष मे मत्सरस्य कालस्तव बर्द्धमानं वर्धयितुम्। इयं वयस्यकया सह निगड़-बन्धने नीता मालविका। यद्यनुमन्यसे आर्य्यपुत्रमपि तव कृते विज्ञा-पयिष्यामि। स०

दंसिदो अणुग्गहो । कस्स वा पसाएण अअं जणो वड्ढ-
दित्ति । (१)

चेटी । तह । (२) इति निष्क्रान्ता ।

निपु । परिक्रम्यावलोक्य च । एस दुवारे समुद्दगेहकस्स विप-
णिगदो विअ वुसहो गोदमो आसीणो एव्व णिद्दाअदि । (३)

इरा । किं णु क्खु अच्चाहिदम् । सावसेसो विअ विसवि-
आरो भवे । (४)

निपु । पसण्णमुहवण्णो दीसदि । अवि अ धुवसिद्धिणा
चिइस्सिदो । ता से असङ्कणिज्जं पावं । (५)

विदू । उत्स्वप्नायते । भोदि ! मालविए ! । (६)

निपु । सुदं भट्टिणीए । कस्स वा एसो अत्तणीणो [ एस

---

(१) इरावती । नागरिके ! विज्ञापय देवीम् । का वयं भट्टिनीं नियोजयितुं पाठान्तरे भट्टिनीनीतिं जेतुम् । परिजननिग्रहेण मयि दर्शितोऽनुग्रहः कस्य वा प्रसादेनायं जनो बर्धत इति । स० उद्वर्धते ।

(२) चेटी । तथा । स०

(३) निपुणिका । एष द्वारे समुद्रगृहकस्य विपणिगत इव वृषभः गोतम आसीन एव निद्रायते । स०

(४) इरावती । किं नु खल्वत्याहितम् । सावशेष इव विषविकारो भवेत् । स०

(५) निपुणिका । प्रसन्नमुखवर्णो दृश्यते । अपि च ध्रुवसिद्धिना चिकित्सितः । तदस्य अशङ्कनीयं पापम् । स०

(६) विदूषकः । भवति ! मालविके ! । स०

कितवो ] अब्भवहारिअसंबन्धापेक्खी किदग्घो। इदो सव्वं कालं सोत्थिवअणमोदएहिं कुक्खिं पुरिअ संपदं मालविअं सिविणावेदि। (१)

विदू। इरावदीं अदिक्कमन्ती होहि। (२)

निपु। एदं अच्चाहिदम्। भुअंगभीरुं बह्मबन्धुं इमिणा भुअङ्गकुडिलेण अत्तणो दण्डकट्ठेण अन्तरिदा भीसेमि [ ताडइस्सम् ]। (३)

इरा। अरिहदि किदग्घो सप्पदंसणम्। (४)

निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति।

विदू। सहसा प्रबुध्य। अविहा अविहा। दव्वीकरो मे उवरि परिपडिदो। (५)

राजा। सहसोपसृत्य। न भेतव्यं न भेतव्यम्।

---

(१) निपुणिका। श्रुतं भट्टिन्या। कस्य वेष आत्मनीनः। [एष कितवः] अभ्यवहार्यसम्बन्धापेक्षी कृतघ्नः। इतः सर्वं कालं स्वस्तिवचनमोदकैः कुक्षिं पूरयित्वा साम्प्रतं मालविकां स्वप्नायति। स० इतः प्रभृति।

(२) विदूषकः। इरावतीमतिक्रामन्ती भव। स०

(३) निपुणिका। एतदत्याहितम्। भुजङ्गभीरुं ब्रह्मबन्धुमनेन भुजङ्गकुटिलेनात्मनो दण्डकाष्ठेनान्तरिता भाययामि पाठान्तरे ताडयिष्यामि। स०

(४) इरावती। अर्हति कृतघ्नः सर्पदंशनम्। स०

(५) विदूषकः। अविहा अविहा। दर्वीकरो मे उपरि परिपतितः। स०

माल। अनुसृत्य। मा दाव सहसा णिक्कमिस्ससि [ णिक्कमदु भट्टा ] सप्पोत्ति भणादि। (१)

इरा। हद्धी हद्धी। भट्टा दाव इदो एव्व धावदि। (२)

विदू। सप्रहासम्। कहं दण्डकाट्ठं एदम्। अहं पुण आणे। जं मए केदअकण्डएहिं दंसं करिअ [ सप्पस्स अयसो किदं ] [ सप्पदंसो किदो ] तं मे फलिदं त्ति। (३)

ततः प्रविशति पटाक्षेपेण बकुलावलिका।

बकुला। मा क्खु भट्टा पविसदु। इह कुडिलगई सप्पो विअ दीसदि। (४)

इरा। राजानं सहसोपसृत्य। अवि णिव्विग्घमणोरहो दिवासंकेदो मिहुणस्स। (५)

सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः।

---

(१) मालविका। मा तावत्सहसा निष्क्रमिष्यसि [ निष्क्रामतु भर्ता ]। सर्प इति भणति। स०

(२) इरावती। हा धिक् हा धिक्। भर्ता तावदित एव धावति। स०

(३) विदूषकः। कथं दण्डकाष्ठमेतत्। अहं पुनर्जाने। यन्मया केतककण्टकैर्दंशं कृत्वा सर्पस्यायशः कृतं पाठान्तरे [ सर्पदंशः कृतः ] तन्मे फलितमिति। स०

(४) बकुलावलिका। मा खलु भर्ता प्रविशतु। इह कुटिलगतिः सर्प इव दृश्यते। स० इरावत्याः कुटिलवर्तित्वात् सर्पसादृश्यम्।

(५) इरावती। अपि निर्विघ्नमनोरथो दिवासङ्केतो मिथुनस्य। स०

राजा। प्रिये! अपूर्वोऽयमुपचारः। (१)

इरा। बउलावलिए! भट्टाहिसारविसआ संपुण्णा दे पइण्णा। (२)

बकुला। पसीददु भट्टिणी। किं मए किदं त्ति देवो पुच्छिदव्वो। दद्दुरा वाहरन्ति त्ति किं देवो पुहविं वरिसिदुं सुमरेदि?। (३)

विदू। मा दाव भोदीए दंसणमेत्तेण अत्तभवं पणिवादलङ्घणं विसुमरिदो भोदि। तुमं पुण पसादं ण गेह्णासि। (४)

इरा। कुविदावि अहं किं करिस्सम्। (५)

---

(१) अयमुपचारः दिवासङ्केताभिसाररूपमित्यत्रापवादः अपूर्वः पूर्वमननुभूतः।

(२) इरावती। बकुलावलिके! भर्त्रभिसारविषया संपूर्णा ते प्रतिज्ञा। स०

(३) बकुलावलिका। प्रसीदतु भट्टिनी। किं मया कृतमिति देवः प्रष्टव्यः। दर्दुरा व्याहरन्तीति किं देवः पृथिवीं वर्षितुं स्मरति?। स० भेकशब्दश्रवणेनैव किमिन्द्रः वर्षणाय प्रवर्तते अपि तु नैव यदा तस्येच्छा तदैव वर्षति तदिच्छानुसारित्वात् वर्षाया अतः देवेच्छैवात्र कारणं किं मम प्रतिज्ञयेति भावः।

(४) विदूषकः। मा तावद्भवत्या दर्शनमात्रेणात्रभवान् प्रणिपातलङ्घनं विस्मृतो भवति। त्वं पुनः प्रसादं न गृह्णासि। स०। प्रणिपातलङ्घनं तज्जन्यापराधः भवत्या दर्शनमात्रेण न विस्मरति। अपि तु तन्निवारणोपायो भवत्या करणीयस्तदा विस्मृतो भवेदित्याशयः।

(५) इरावती। कुपिताप्यहं किं करिष्यामि। स०

राजा । एवमेतत् । अस्थाने कोप इत्यनुपपन्नं त्वयि ।

कदा मुखं वरतनु ! कारणादृते
तवागतं क्षणमपि कोपपात्रताम् ? ।
अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति ॥ (१)

इरा । अत्थाणे त्ति सुट्ठु अवधारिदं अज्जउत्तेण । अण्णसंकन्तेसु अह्माणं भाअधेएसु जदि उण कुप्पेअं णं अहं हस्सा भवे । (२)

राजा । त्वमन्यथा कल्पयसि । अहं पुनः सत्यमेव कोपस्थानं न पश्यामि । कुतः ।

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो बन्धुम् ।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च ॥ (३)

---

(१) हे वरतनु ! तव मुखं कारणादृते अपराधादिरूपं हेतुं विना कोपपात्रताम् कोपभागितां क्षणमपि कदा गतम् ? अपि तु अपराधं दृष्ट्वैव कुप्यसि नेतरथा कदापीत्यर्थः । कारणाभावे कोपस्यानुचितत्वं दृष्टान्तेन द्रढ़यति । अपर्वणि पूर्णिमाप्रतिपत्सन्धिकालभिन्ने विभावरी रात्रिर्ग्रहकलुषेन्दुमण्डला कदा भवति अपि तु नैव तथाच कोपकारणं विना इदं कथं भविष्यति तत्कथयेत्यर्थः ।

(२) इरावती । अस्थाने इति सुष्ठु अवधारितमार्यपुत्रेण । अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयं नन्वहं हस्या भवेयम् । स०

(३) कृतापराधोऽपि परिजनः उत्सवदिवसेषु बन्धुं संयन्तुं नार्हति न योग्यो भवति इति हेतोः मया एते मालविकाबकुलावलिके बन्धात्

इरा। णिउणिए! गच्छिअ देविं विण्णवेहि। दिट्ठं [भअदीए एक] वक्खवादित्तणम्। अवहिदं मे हिअअं अज्जेत्ति। (१)

निपु। तह। (२) इति निष्क्रान्ता।

विदू। आत्मगतम्। अहो अणत्थो संपडिदो बन्धणब्भट्टो गेहकवोदओ विडालिआए आलोए पडिदो। (३)

प्रविश्य निपुणिका।

निपु। देवि! जदिच्छादिट्ठाए माहविआए आचक्खिदम्। एव्वं णिमित्तम्। (४) इति कर्णे कथयति।

इरा। आत्मगतम्। उववण्णं सव्वं ज्जेव्व। बम्हबन्धुणा उब्भि

---

मोचिते ते च प्रणिपतितुं नमस्कर्तुं मामुपगते नान्यकारणादिति वाक्यशेषः।

(१) इरावती। निपुणिके! गत्वा देवीं विज्ञापय। दृष्टं [भवत्या एक] पक्षवादित्वम्। अवहृतं मे हृदयमद्येति। स०

(२) निपुणिका। तथा। स०

(३) विदूषकः। अनर्थः संपतितो बन्धनभ्रष्टो गृहकपोतको विडालिकाया आलोके पतितः। स०

(४) निपुणिका। देवि! यदृच्छादृष्टया माधविकयाख्यातम्। एवं निमित्तम्। स० पूर्ववृत्तस्य सोपसर्गनक्षत्रदोषोपशान्तये सर्वबन्धमोक्षणकारणोद्भावनरूपम् विदूषकवाक्यमेव कारणमिति कर्णे श्रावितम्।

णो पश्चोत्र्मो । विदूषकं विलोक्य प्रकाशम् । इमस्स अस्स कामतन्तसचिवस्स बह्मबन्धुणो णीदी । (१)

विदू । भोदि ! जदि णीदीए एक्कंपि अक्खरं पढेअं ण अत्त भवं संसिदो भवे । (२)

राजा । अपवार्य्य । आः कथं नु खल्वस्मात्संकटान्मोच्यावहे ।

प्रविश्य सावेगा जयसेना ।

जय । देव ! कुमारी वसुलच्छी कन्दुअं अणुधावन्ती पिङ्गलवाणरेण बलिअं वित्तासिदा । अङ्कणिसण्णा अ देवीए पवाद्किसलअं विअ वेबमाणा ण किंपि पडिवज्जदि । (३)

राजा । कष्टं कष्टम् । कातरो बालभावः ।

इरा । सावेगम् । तुवरदु तुवरदु अज्जउत्तो णं समासासइदुं मा से संदावजणिदो विआरो वड्ढदु । (४)

राजा । अहमेनां संज्ञापयामि । इति सत्वरं निष्क्रामति ।

---

(१) इरावती । उपपन्नं सर्वमेव । ब्रह्मबन्धुनोञ्जिह्मः प्रयोगः । इयमस्य कामतन्त्रसचिवस्य ब्रह्मबन्धोर्नीतिः । स०

(२) विदूषकः । भवति ! यदि नीत्या एकमप्यक्षरं पठेयं न अत्रभवन्तं संश्रितो भवेयम् । स०

(३) जयसेना । देव ! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलीयो वित्रासिता । अङ्कनिषण्णा च देव्याः प्रवातकिसलयमिव वेपमाना न किमपि प्रतिपद्यते । स०

(४) इरावती । त्वरतां त्वरतामार्यपुत्रः एनां समाश्वासयितुं मास्याः सन्तापजनितो विकारो वर्द्धताम् । स०

विदू। साहु रे पिङ्गलवाणर ! साहु। परित्तादो तुए सवक्खो। (१)

निष्क्रान्तो राजा विदूषकश्चेरावती निपुणिका प्रतीहारी च।

माल। देवीं चिन्तिअ वेवइ मे हिअअम्। ण आणे संपदि किं अदो अणुभविदव्वं भविस्सदित्ति। (२)

नेपथ्ये। अच्चरिअं अच्चरिअं। अपुण्णे पञ्चरत्ते दोहलस्स मउलेहिं संणद्धो तवणीआसोओ। जाव देवीए णिवेदेमि। (३)

उभे श्रुत्वा प्रहृष्टे।

बकुला। आसासदु सही सच्चपइण्णा देवी। (४)

माल। तेन अहं पमदवणपालिआए पिट्ठदो भोमि। (५)

इति निष्क्रान्ताः सर्वे।

इति चतुर्थोऽङ्कः।

---

(१) विदूषकः। साधु रे पिङ्गलवानर ! साधु ! परित्रातस्त्वया स्वपक्षः। स० तुल्यबुद्धित्वादात्मनस्तवापत्यमिति तस्याशयः।

(२) मालविका। देवीं चिन्तयित्वा वेपते मे हृदयम्। न जाने संप्रति किमतोऽनुभवितव्यं भविष्यतीति। स०

(३) नेपथ्ये। आश्चर्यमाश्चर्यम्। अपूर्णे पञ्चरात्रे दोहदस्य, मुकुलैः समनद्धस्तपनीयाशोकः। यावद्देव्यै निवेदयामि। स०

(४) बकुलावलिका। आश्वसितु सखी। सत्यप्रतिज्ञा देवी। स०

(५) मालविका। तेनाहं प्रमादवनपालिकायाः पृष्ठतो भवामि। स०

# पञ्चमोऽङ्कः ।



ततः प्रविशत्युद्यानपालिका ।

उद्यान । उवक्खित्तो मए सक्कारविहिणा तवणीआसो अस्स भित्तिवेदिआबन्धो । जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । परिक्रम्य । अदो देव्वस्स अणुकम्पणीआ मालविआ तस्सिं तह चण्डिआ देवी इमिणा असोअदोहलवुत्तन्तेण पसादुम्मुही भविस्सदि । कहिं णु क्खु भवे देवी ? । विलोक्य । अम्मो एसो देवीए परिअणन्तरो किंपि जदुमुद्दालञ्छिदं मञ्जूसं गेह्णिअ चउस्सालादो कुज्जो णिक्कामदि । पुच्छिस्सं दाव णम् । (१)

ततः प्रविशति यथानिर्दिष्टहस्तः कुब्जः ।

उद्यान । सारस ! कहिं पत्थिदोसि ? । (२)

---

(१) उद्यानपालिका । उपक्षिप्तो मया सत्कारविधिना तपनीयाशोकस्य भित्तिवेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अतो देवस्यानुकम्पनीया मालविका । तस्यां तथा चण्डिका देवी अनेनाशोकदोहदवृत्तान्तेन प्रसादोन्मुखी भविष्यति । कुत्र नु खलु भवेत् देवी ? । अहह एष देव्याः परिजनान्तरं किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालात् कुब्जो निष्क्रामति । प्रक्ष्यामि तावदेनम् । स०

(२) उद्यानपालिका । सारस ! कुत्र प्रस्थितोऽसि ? । स०

सार। महुअरिए! विज्जाचरिआणं बह्मणाणं इमं णिच्च-दक्खिणं मासिदं अज्जपुरोहिदस्स हत्थं पावइस्सम्। (१)

मधु। अह किं णिमित्तं?। (२)

सार। जदा पहुदि सुदं सेणापदिणा। अस्सतुरंगरक्खणे णिउत्तो भट्टिदारओत्ति। तस्स आउसत्थं अट्ठसदसुवण्णपरि-माणं दक्खिणा एहिं पडिस्सा होदि। (३)

मधु। अह कहिं देवी किं वा अणुचिट्ठदि?। (४)

सार। मङ्गलगेहके आसणत्था विदब्भविसआदो भादुणा वीरसेणेण पेसिदं लेहं लिपिअरेहिं वाचीअमाणं सुणादि। (५)

मधु। को उण विदब्भराअवुत्तन्तो सुणीअदि?। (६)

सार। वसीकिदो किल वीरसेणप्पमुहेहिं दण्डचक्केहिं भट्टिणो विदब्भणाहो। मोइदो किल से दाआदो माह-

---

(१) सारस । मधुकरिके! विद्याचरितानां ब्राह्मणानामिमां नित्य-दक्षिणां मासिकीमार्य्यपुरोहितस्य हस्तं प्रापयिष्यामि। स०

(२) मधुकरिका। अथ किं निमित्तम्?। स०

(३) सारसः। यदा प्रभृति श्रुतं सेनापतिना। यज्ञतुरङ्गरक्षणे नियुक्तो भर्तृदारक इति तस्यायुष्यार्थमष्टशतसुवर्णपरिमाणं दक्षिणेभ्यः प्रतिज्ञा भवति। स०

(४) मधुकरिका। अथ कुत्र देवी किं वानुतिष्ठति?। स०

(५) सारसः! मङ्गलस्थहके आसनस्था विदर्भविषयात् भ्राता वीर-सेनेन प्रेषितं लेखं लिपिकरैर्वाच्यमानं शृणोति। स०

(६) मधुकरिका। कः पुनर्विदर्भराजवृत्तान्तः श्रूयते?। स०

वसेणो। दूदो अ महासारभूदाणि रअणवाहणाणि सि[प्पिदा]-[प्पका]रिआभूइट्ठपरिअणं च उवाअणीकरिअ भट्टिणो सआसं पेसिदो। सो किल भट्टारअं पेक्खिस्सदि। (१)

मधु। गच्छ अणुचिट्ठ अत्तणो णिओअम्। अहंपि देवीं पेक्खिस्सम्। (२)

इति निष्क्रान्तौ।

प्रवेशकः। (३)

ततः प्रविशति प्रतीहारी।

प्रती। आणत्तह्मि देवीए असोअसक्कारव्वाविदाए, विण्णवेहि अज्जउत्तम्। इच्छामि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छिं पच्चक्खीकादुं त्ति। ता जाव धम्मासणगदं देवं पडिवालेमि। इति परिक्रामति। (४)

(१) भारवः। वशीकृतः किल वीरसेनप्रमुखैर्दण्डचक्रैर्भर्तुर्विदर्भनाथः। मोचितश्च किलास्य दायादो माधवसेनः। दूतश्च महासाराणि रत्नवाहनानि शिल्पिदा[त्पका]रिकाभूयिष्ठं परिजनं चोपायनीकृत्य भर्तुः सकाशं प्रेषितः। स किल भट्टारकं प्रेक्षिष्यते। स०

(२) मधुकरिका। गच्छानुतिष्ठात्मनो नियोगम्। अहमपि देवीं प्रेक्षिष्ये। स०

(३) वृत्तवर्तिष्यमाणानामित्याद्युक्तलक्षणः। अत्र च वृत्तस्य अशोकविकाशस्य वर्त्तिष्यमाणस्य शिल्पिदारिकादिवृत्तान्तस्य निदर्शनम्।

(४) प्रतीहारी। आज्ञप्तास्मि देव्याऽशोकसत्कारव्यापृतया, विज्ञा-

नेपथ्ये ।

वैता । दिष्ट्या दण्डेनेवारिविग्रहःसु वर्त्तते देवः ।

प्रथमः ।

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्कवान् ।
विजयकरिणामालानाङ्कैरुपोढबलस्य ते
वरद ! वरदारोधोवृक्षैः सहावनतो रिपुः ॥ (१)

द्वितीयः ।

विरचितपदं वीरप्रीत्या सुरोपमसूरिभि
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम् ॥ (२)

---

यथार्य्यपुत्रम् । इच्छाम्यार्य्यपुत्रेण सहाशोकवृक्षस्य प्रसूनसम्पत्तिं प्रत्यक्षीकर्तुमिति । तद्यावद्धर्मासनगतं देवं प्रतिपालयामि । स०

(१) आत्तरतिः गृहीतरतिनामपत्नीकः गृहीतप्रीतिश्च विदिशातीरोद्यानेषु विदिशाख्यनदीकूलस्थारामेषु अनङ्ग इव काम इव अङ्कवान् प्रशस्ताङ्कवान् परभृतकलव्याहारेषु परभृतानां कोकिलानां परपुष्टानां वन्दिनाञ्च कलव्याहारेषु कलोक्तिषु मधुं वसन्तं माधुर्यञ्च नयसि । हे वरद ! अभीष्टद ! उपोढबलस्य समर्थसैन्यस्य ऊर्जितसामर्थ्यस्य च ते तव रिपुः शत्रुः विजयकरिणाम् विजयहस्तिनाम् आलानाङ्कैः बन्धनसाधनैः वरदारोधवृक्षैः वरदाख्यनदीतीरस्थवृक्षैः सह अवनतः नम्रतामनुकूलताञ्च गतः ।

(२) परिघगुरुभिः परिघास्त्रवद्दृढैः दोर्भिर्बाहुभिर्वक्षोभिरित्यर्थात्

प्रती । एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आअच्छदि । अहंपि दाव इमस्स मुहादो अवसरिअ एदं मुहालिन्दतोरणं समस्सिदा होमि । (१) इत्येकान्ते स्थिता ।

प्रविश्य सवयस्यो राजा ।

कान्तां विचिन्त्य सुलभेतरसंप्रयोगां

श्रुत्वा विदर्भपतिमानमितं बलैश्च ।

धाराभिरातप इवाभिहतं सरोजं

दुःखायते च हृदयं सुखमश्नुते च ॥ (२)

विदू । इह पेक्खामि [ जह अहं पेक्खामि तह ] एक्कन्त-सुहिदो भवं भविस्सदि त्ति । (३)

---

रुक्मिणीं हृतवतो विष्णोः, विदर्भपतेः श्रियं दण्डानीकैः दण्डप्रधानसैन्यैः हृतवतस्तव च एतयोरुभयोश्चरितं सुरोपमसूरिभिः देवतुल्यपण्डितैः वीरप्रीत्या शूरभक्त्या च विरचितपदं कीर्त्तितमाहात्म्यम् क्रथकैशिकान् तदाख्यविषयान् मध्येकृत्य अभिव्याप्य स्थितम् अनेन (तव) विदर्भश्रीहरणं विष्णोः रुक्मिणीहरणमिव तवातीव यशस्करमिति भावः ।

(१) प्रतीहारी । एष जयशब्दसूचितप्रस्थानो भर्त्तैत एवागच्छति । अहमपि तावदस्य मुखात् समवसृत्यैतन्मुखालिन्दतोरणं समाश्रिता भवामि । स०

(२) कान्तां मालविकां सुलभेतरसंप्रयोगां दुर्लभप्राप्त्युपायां विचिन्त्य, अनेन दुःखहेतुत्वं दर्शितम् । विदर्भाधिपतिं बलैः सैन्यैः आनमितं वशीकृतञ्च श्रुत्वा अनेन सुखहेतुत्वं दर्शितम् । आतपे विद्यमानमिति शेषः । सरोजं धाराभिः आहितमिव हृदयं दुःखायते सुखमश्नुते प्राप्नोति च ।

(३) विदूषकः । इह प्रेक्षे ( यथा अहं प्रेक्षे तथा ) एकान्तसुखितो भवान् भविष्यतीति । स०

राजा । कथमिव ? ।

विदू । अज्ज किल देवीए धारिणीए पण्डिदकोसिआ भणिदा । भअवदि ! तुमं जदि सच्चं पसाहणगव्वं वहेसि दंसेहि दाव मालविआए सरीरे विवाहणेवत्थं त्ति । तदो सविसेसकोदुहल्लं अलंकिदा मालविआ तत्तभोदीए । कदावि पूरए भवदो मणोरहं । (१)

राजा । सखे ! मदपेक्षामनुवृत्य अनया धारिण्या पूर्वचरितैः सम्भाव्यत एवैतत् ।

प्रती । उपगम्य । जेदु जेदु देवो । देवी विण्णवेदि । तवणीआसोअस्स कुसुमोग्गमसिरिं अज्जउत्तेण सह पच्चक्खीकादुं इच्छामि त्ति । (२)

राजा । ननु तत्रैव देवी ? ।

प्रती । अधइं । जहा तुह सम्माणसुहं । अन्तेउरं विसज्जिअ मालविआपुरोएण अत्तणो परिअणेण [पण्डिअकोसिआए अ] समं देवं पडिवालेदि । (३)

---

(१) विदूषकः । अद्य किल देव्या धारिण्या पण्डितकौशिकी भणिता । भगवति ! त्वं यदि सत्यं प्रसाधनगर्वं वहसि दर्शय तावत् मालविकायाः शरीरे विवाहनेपथ्यमिति । ततः सविशेषकौतूहलमलङ्कृता मालविका तत्रभवत्या । कदापि पूरयेत् भवतो मनोरथम् । स०

(२) प्रतीहारी । जयति जयति देवः । देवी विज्ञापयति । तपनीयाशोकस्य कुसुमोद्गमश्रियमार्यपुत्रेण सह प्रत्यक्षीकर्तुमिच्छामीति । स०

(३) प्रतीहारी । अथ किम् । यथा तव संमानसुखम् । अन्तःपुरं

राजा । सहर्षं विदूषकं विलोक्य । जयसेने ! गच्छाग्रतः ।

प्रती । एदु एदु देवो । (१) इति परिक्रामन्ति ।

विदू । विलोक्य । भो वअस्स ! किंचि परिवुत्तजोव्वणो विअ वसन्तो पमदवणे लक्खीअदि । (२)

राजा । यदाह भवान् ।

अग्रे विकीर्णकुरुवकफलजालकभिद्यमानसहकारम् ।
परिणममुखमिदमृतोरुत्सुकयति यौवनं चेतः ॥ (३)

विदू । भो अअं सो दिण्णणेवत्थो विअ कुसुमत्थवएहिं तवणीआसोओ । आलोएदु भवं । (४)

राजा । स्थाने खलु प्रसवमन्थरोऽभूद्यदयमिदानीमनन्यसाधारणीं शोभां पुष्यति [ उद्वहति ] । पश्य—

---

विसृज्य मालविकापुरोगेण आत्मनः परिजनेन [पण्डित कौशिक्या च अ०] समं देवं प्रतिपालयति । स० यथा सम्मानः सुखञ्च भवेत्तथा कृतमित्यर्थः ।

(१) प्रतीहारी । एत्वेतु देवः । स०

(२) विदूषकः । भो वयस्य ! किञ्चित्परिवृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते । स०

(३) अग्रे पुरतः विकीर्णानां व्याप्तानां कुरुवकाणां फलजालकैः फलसमूहैर्भिद्यमानोऽवलम्ब्यमानः सहकारो यत्र तादृशम् ऋतोर्वसन्तस्य इदं परिणाममुखं परिणतेः परिपाकस्य आरम्भात्मकं यौवनं चेतः समुत्सुकयति उत्कण्ठितं करोति । यौवनदर्शनविषये व्यग्रं भवतीत्यर्थः ।

(४) विदूषकः । भो अयं स दत्तनेपथ्य इव कुसुमस्तवकैस्तपनीयाशोकः । अवलोकयतु भवान् । स०

सर्वाशोकलतानां प्रथमं सूचितवसन्तविभवानाम् ।
निर्वृत्तदोहदेऽस्मिन् संक्रान्तानीव मुकुलानि ॥ (१)

विदू । तह वीसद्धो होहि । अम्हासु तह उवगदेसु वि धारिणी पासपरिवत्तिणिं मालविअं अणुमण्णेदि । (२)

राजा । सहर्षम् । पश्य पश्य सखे !

मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया ।
विस्तृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥ (३)

ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः ।

माल । आत्मगतम् । जाणामि णिमित्तं मह कोदुआलंका-

---

(१) प्रथमं सूचितवसन्तविभवानाम् ज्ञापितवसन्तसम्पत्तीनां सर्व्वाशोकलतानां मध्ये निर्वृत्तदोहदे निष्पन्नौषधे प्राप्तमालविकापादस्पर्शे इति यावत् अस्मिन् तपनीयाशोके मुकुलानि सर्व्वासामित्यनुषङ्गः संक्रान्तानीव । अन्येषां दोहदाभावात् सर्व्वेषां मुकुलानामेकत्र समावेशादिव पुष्पप्राचुर्य्यमित्याशयः ।

(२) विदूषकः । तथा विस्रब्धो भव । अस्मासु तथा उपगतेष्वपि धारिणी पार्श्वपरिवर्त्तिकां मालविकामनुमन्यते । स० अनुमन्यते न दृष्टिपथादपसारयतीत्यर्थः ।

(३) विस्तृतहस्तकमलया प्रियया मालविकया सह एवेदानीमभीष्टतमत्वात् प्रियात्वम् अनूत्थिता पश्चात् उत्थिता अनुगतेति यावत् देवी धारिणी नरेन्द्रलक्ष्म्या नृपश्रिया अनुगता वसुमतीव मामभ्युत्तिष्ठति । अनूत्थितेत्यत्र अनुपूर्व्वकस्थाधातोः कर्म्मणि क्तः, अन्वाश्रितमदश्वत्थमितिवदस्य सकर्म्मकत्वमुपेयम् ।

रस्स। तहवि मे हिअअं विसिणीपत्तगदं विअ सलिलं वेवदि। दक्खिणेदरं णअणं अ बहुसो फुरइ। (१)

विदू। भो वअस्स! विवाहणेवत्थेण सविसेसं क्खु सोहदि अत्तभोदी मालविआ। (२)

राजा। पश्याम्येनाम्। एषा—

अनतिलम्बिदुकूलनिवासिनी
लघुभिराभरणैः प्रतिभाति मे।
उडुगणैरुदयोन्मुखचन्द्रिका
हृतहिमैरिव चैत्रविभावरी॥ (३)

---

(१) मालविका। जानामि निमित्तं मम कौतुकालङ्कारस्य। तथापि मे हृदयं विसिनीपत्त्रगतमिव सलिलं वेपते। दक्षिणेतरं नयनं च बहुशः स्फुरति। स० निमित्तं स्वर्णाशोकस्य दोहददानेन पञ्चरात्राभ्यन्तरे तस्य पुष्पोद्गमे देवीप्रसादरूपं कारणं जानामि। दक्षिणेतरम् वामं नयनं स्फुरति तथाच इष्टलाभो भविष्यति इत्यनुमीयते नारीणां वामाक्षिस्पन्दने "भ्रूभागमध्ये प्रियसङ्गमः स्यात् नासाक्षिमध्ये च सहायलाभः। दृगन्तमध्यस्फुरणेऽर्थलाभोत्कण्ठे क्रमाद्दिस्फुरिते दृगादौ" इति पुंसां सदा दक्षिणदेहभागे स्त्रीणाञ्च वामावयवे प्रजातः इति च वसन्तराजशाकुने शुभफलत्वमुक्तम्।

(२) विदूषकः। भो वयस्य विवाहनेपथ्येन सविशेषं खलु शोभतेऽत्रभवती मालविका। स०

(३) अनतिलम्बिदुकूलनिवासिनी परिहितानतिदीर्घवसना इयं मालविका लघुभिरल्पैराभरणैः उदयोन्मुखी चन्द्रिका यत्र, तादृशी अनेन शुक्लपक्षो सूचितः। चैत्रविभावरी चैत्रशुक्लपक्षरात्रिरित्यर्थः। हृतहिमैः अपसारितदीप्तिप्रतिबोधकतुषारैः उडुगणैरिव मे प्रतिभाति। आभर-

धारि । उपेत्य । जेदु जेदु अज्जउत्तो । (१)

विदू । वड्ढदु भोदी । (२)

परि । विजयतां देवः ।

राजा । भगवति ! अभिवादये ।

परि । अभिप्रेतसिद्धिरस्तु ।

देवी । सस्मितम् । अज्जउत्त ! एस दे अम्हेहिं तरुणीजण-सहाअस्स असोओ संकेदगेहको संकप्पिदो । (३)

विदू । भो आराहिओसि । (४)

राजा । सव्रीडमशोकमभितः परिक्रामन् ।

नायं देव्या भाजनत्वं न नेयः
सत्काराणामीदृशानामशोकः ।
यः सावज्ञो माधवश्रीनियोगे
पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥ (५)

---

सामासुङ्गमेन सादृश्यपूर्ण्या मालविकायाः विभावरीरूपेणोत्प्रेक्षेति भावः ।

(१) धारिणी । जयति जयति आर्य्यपुत्रः । म०

(२) विदूषकः । वर्धतां भवती । म०

(३) देवी । आर्य्यपुत्र ! एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतस्थानकः संकल्पितः । म० सङ्केतस्थानमिव दूतार्थं ननु अभीष्टसमागम-हेतुत्वात् तत्समत्वम् । म०

(४) विदूषकः । भो आराधितोऽसि । म० देव्येति शेषः । इति राजानं प्रत्युक्तिः ।

(५) अयमशोकः देव्या ईदृशानां सत्काराणां सम्मानानां भाजनत्वं

विदू । भो वीसद्धो भविअ जोव्वणवदिं पेक्ख । (१)

धारि । कां ? । [ किं विअ ? ] (२)

विदू । तवणीआसोअस्स कुसुमसोहं । (३)

सर्वे उपविशन्ति ।

राजा । मालविकां विलोक्यात्मगतम् । कष्टः खलु सन्निधिवियोगः ।

अहं रथाङ्गनामेव प्रिया सहचरीव मे ।
अननुज्ञातसम्पर्का धारिणी रजनीव नौ ॥ (४)

प्रविश्य कञ्चुकी ।

कञ्चु । जयति जयति देवः । अमात्यो विज्ञापयति । तस्मिन्

---

न नेयः ? न प्रापणीय इति न अपि तु नेय एव तत्र हेतुत्वेन द्वितीयार्द्धम् । योऽशोकः माधवश्रीनियोगे वसन्तसम्पदो नियोगे सपुष्पत्वभवनरूपे आदेशे सावज्ञः कृतानादरः सन् त्वत्प्रयत्ने तव प्रयासे पुष्पैः विकाशैः करणैः आदरं शंसति सूचयति । वसन्तश्रीसमादेशमनादृत्य पुष्पोद्गमो न कृतः इदानीं तव प्रयासे समादरपरो भूत्वा पुष्पाढ्यमभूदित्यर्थः ।

(१) विदूषकः । भो विश्रब्धो भूत्वा यौवनवतीं प्रेक्षस्व । स०

(२) धारिणी । काम् ? । [कामिव] । स०

(३) विदूषकः । तपनीयाशोकस्य कुसुमशोभाम् । स० विदूषकेण मालविकामुद्दिश्यैवेदं कथितं देवीसकाशे तु तदपह्नुतमिति बोध्यम् ।

(४) समीपविच्छेदे सदृष्टान्तं दुःखाकरत्वं दर्शयन्नाह अहमित्यादि । अहं रथाङ्गनामा चक्रवाक इव मे मम प्रिया मालविका सहचरीव चक्रवाकस्येत्यादि निकटस्थैवेति च ध्वनिः, धारिणी नौ आवयोः अननुज्ञातसम्पर्का अनभ्युपगतसंयोगा रजनीव प्रतिबन्धिकेति शेषः । नानुज्ञातः प्रतिषिद्धः सम्पर्को यस्याः पक्षे मुनिशापात् प्रतिषिद्धः सम्पर्को यस्यामिति विग्रहभेदः ।

काले विदर्भराजोपायने द्वे शि[ल्पदारिके] ल्पकारिके मार्ग-परिश्रमादलघुशरीरे इति कृत्वा न प्रवेशिते। सम्प्रति देवोपस्थानयोग्ये। तदाज्ञां देवो दातुमर्हति ।

राजा। प्रवेशय ते।

कञ्चु। यदाज्ञापयति देवः। इति निष्क्रम्य ताभ्यां सह प्रविश्य। इत इतो भवत्यौ।

प्रथ। जनान्तिकम्। हला रमणीए! अपुव्वं विअ इमं राअउलं पविसन्तीए मे पसीददि हिअअःभन्तरमङ्गदो अप्पा। (१)

द्विती। जोसिणिए! मह्हवि एव्वं। अत्थि क्खु लोअप्पवादो "आगामि सुहं दुक्खं वा हिअअसमवत्था कधेदि" त्ति। (२)

प्रथ। सच्चो दाणिं होदु। (३)

कञ्चु। एष देव्या सह देवस्तिष्ठति। उपसर्पतां भवत्यौ।

उभे। उपसर्पतः मालविकां परिव्राजिकां च दृष्ट्वा परस्परमवलोकयतः।

उभे। प्रणिपत्य। जेदु जेदु भट्टा। जेदु जेदु भट्टिणी। (४)

---

(१) प्रथमा। हला रमणीये! अपूर्वमिदं राजकुलं प्रविशन्त्या मे प्रसीदति हृदयाभ्यन्तरसङ्गत आत्मा। स०

(२) द्वितीया। ज्योत्स्निके! ममाप्येवम्। अस्ति खलु लोकप्रवादः "आगामि सुखं दुःखं वा हृदयसमवस्था कथयति" इति। स०

(३) प्रथमा। सत्य इदानीं भवतु। स०

(४) उभे। जयति जयति भर्ता। जयति जयति भट्टिनी। स०

राजा। निषीदतम्।

उभे। राजाज्ञया उपविष्टे।

राजा। कस्यां कलायामभिविनीते भवत्यौ।

उभे। भट्टा! सङ्गीदए अब्भन्तरम्ह। (१)

राजा। देवि! गृह्यतामनयोरन्यतरा।

धारि। मालविए! इदो दक्खदरा सङ्गीदसहाइणी दे का रुच्चदि। (२)

उभे। मालविकां दृष्ट्वा। अम्मो भट्टिदारिआ। जेदु जेदु भट्टिदारिआ। (३) इति प्रणिपत्य तया सह बाष्पं विसृजतः।

सर्वे विलोकयन्ति।

राजा। के भवत्यौ? का वेयम्?।

प्रथ। अह्माणं भट्टिदारिआ। (४)

राजा। कथमिव?।

उभे। सुणादु भट्टा। जो सो भट्टिणा विजअदण्डेहिं

---

(१) उभे। भर्तः! सङ्गीतकाभ्यन्तरे स्वः। स० विनीते इति शेषः।

(२) धारिणी। मालविके! इतः दक्षतरा संगीतसहायिनी ते का रोच्यते। स०

(३) उभे। अहह भर्तृदारिका। जयति जयति भर्तृदारिका। स०

(४) प्रथमा। आवयोर्भर्तृदारिका। स०

विदभणाहं वसीकरिअ बन्धणादो मोइदो कुमारो माहवसेणो णाम। तस्स दुइअं कणीअसी बहिणिआ मालविआ णाम।(१)

धारि। कहं राअदारिआ इअम्? । चन्दणं क्खु मए पादुआवदेसेण दूसिदम्। (२)

राजा। अथात्रभवती कथमित्थंभूता? ।

माल। निःश्वस्यात्मगतम्। विहिणिओएण। (३)

द्विती। सुणादु भट्टा दाआदवसं गदे भट्टिदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अह्मारिसं परिअणं उज्झिअ गूढं आणीदा एसा। (४)

राजा। श्रुतपूर्व्वं मयैतत्। ततस्ततः।

द्विती। भट्टा! अदो अवरं ण आणामि। (५)

परि। अतः परमहं मन्दभागिनी कथयिष्यामि।

---

(१) उभे। शृणोतु भर्त्ता। यो स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम। तस्येयं कनीयसी भगिनी मालविका नाम। स०

(२) धारिणी। कथं राजदारिकेयम्?। चन्दनं खलु मया पादुकापदेशेन दूषितम्। स०

(३) मालविका। विधिनियोगेन। स०

(४) द्वितीया। शृणोतु। भर्त्ता दायादवशंगते भर्तृदारके माधवसेने तस्यामात्येन सुमतिनास्मादृशं परिजनमुज्झित्वा गूढमानीतैषा। स०

(५) द्वितीया। भर्त्तः! अतोऽपरं न जानामि। स०

उभे । भट्टिदारिए ! अज्जकोसिईए विअ सरसंजोगो । णं सा एव्व । (१)

माल । अह इम् । (२)

उभे । जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि । भअवदि ! णमो दे । (३)

परि । स्वस्ति भवतीभ्याम् ।

राजा । कथमाप्तवर्गोऽयं भगवत्याः ।

परि । एवमेतत् ।

विदू । तेण कहेदु दाणिं भअवदी अत्तभोदीवुत्तन्तं दाव असेसम् । (४)

परि । सविक्लवम् । तावत् श्रूयताम् । माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ ।

राजा । उपलक्षितः । ततस्ततः ।

---

(१) उभे । भर्तृदारिके ! आर्यप्रकौशिक्या इव स्वरसंयोगः ? । ननु सैव । स०

● (२) मालविका । अथ किम् ? । स०

(३) उभे । यतिवेषधारिण्यार्यकौशिकी दुःखेन विभाव्यते । भगवति ! नमस्ते । स० दुःखेन विभाव्यते इत्यन्तं मालविकां प्रत्युक्त्वा कौशिकीं प्रत्याह भगवतीत्यादि ।

(४) विदूषकः । तेन कथयत्विदानीं भगवत्यत्रभवतीवृत्तान्तं तावदशेषम् । स०

परि। स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्सं बन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः।

राजा। ततस्ततः।

परि। स च अटव्यन्तरे निविष्टो गताध्वा वणिग्गण इव विश्रमितुमारब्धः।

राजा। ततस्ततः।

परि। ततः। किं चान्यत्।

तूणीरपट्टपरिणद्धभुजान्तराल
माणार्ष्णिलम्बिशिखिबर्हकलापधारि।
कोदण्डपाणि निनदत्प्रतिरोधकाना
मापातदुःप्रसहमाविरभूदनीकम्॥ (१)

मालविका भयं रूपयति।

विदू। भोदि! मा भाआहि। अदिक्कन्तं क्खु अत्तभोदी कहेदि। (२)

---

(१) तूणीरपट्टेन परिणद्धं भुजान्तरालं यस्य। आपार्ष्णि पार्ष्णि-पर्य्यन्तं लम्बिनं दोलायमानं बर्हिणो मयूरस्य कलापं पिच्छं धारयति शिखि-धारि कोदण्डपाणि धनुष्पाणि प्रतिरोधकानां दस्युविशेषाणामनीकं सैन्यम् आपातदुःप्रसहम् प्रबलसंयोगमात्रेणात्यन्तदुःसहं यथा तथा निनदत् शब्दायमानम् सत् आविरभूत्।

(२) विदूषकः। भवति! मा बिभेहि। अतिक्रान्तं खल्वत्रभवती कथयति। स०

राजा। ततस्ततः।

परि। ततो मुहूर्त [बद्धायुधा] [मुग्धयोद्धार]स्ते पराङ्-मुखीभूताः सार्थवाहयोद्धारस्तस्करैः।

राजा। भगवति! हन्त अतः कष्टतरमिदानीं श्रोतव्यम्।

परि। ततः स मत्सोदर्यः।

इमां परीप्सुर्दुर्जातेः पराभिभवकातराम्।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः॥ (१)

प्रथ। आं हा हदो सुमदी णम्। (२)

द्विती। तदो क्खु भट्टिदारिआए इअं समवत्था संवुत्ता। (३)

परिव्राजिका वाष्पं सृजति।

राजा। भगवति! तनुत्यजामीदृशी लोकयात्रा। न शोच्य-स्तत्रभवान् सफलीकृतभर्तृपिण्डस्तपस्वी।

परि। ततोऽहं मोहमुपागता यावत् संज्ञां प्रतिलभे ताव-दियं दुर्लभदर्शना संवृत्ता।

---

(१) दुर्जातेः दुष्टकुलात् पराभिभवकातरां परिभवक्लिष्टामिमां माल-विकां परीप्सुः उद्दिधीर्षुः भर्तृप्रियः वसुमतिः प्रियैरपि अत्यन्तदुस्त्यजै-रपीत्यर्थः असुभिः असून् दत्त्वेत्यर्थः आनृण्यं भर्तृपिण्डसेवनोपकारं गतः मृत इत्यर्थः।

(२) प्रथमा। आः हा हतः सुमतिर्ननु। स०

(३) द्वितीया। ततः खलु भर्तृदारिकाया इयं समवस्था संवृत्ता। स०

राजा । महत्खलु कृच्छ्रमनुभूतं तत्रभवत्या ।

परि । ततो भ्रातुः शरीरमग्निसात्कृत्वा पुनर्नवीकृतदुःखया त्वदीयं देशमवतीर्य काषाये गृहीते ।

राजा । युक्तः सज्जनस्यैष पन्थाः ।

परि । सेयमाटविकेभ्यो वीरसेनं वीरसेनाद्देवीं गता । देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्टेत्येवमवसानं कथायाः ।

माल । आत्मगतम् । किं णु क्खु भट्टा साम्पदं भणादि । (१)

राजा । अहो परिभवोपहारिणो विनिपातः । (२) कुतः

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।
स्नानीयवस्त्रक्रियया पत्त्रोर्णं वोपयुज्यते ॥ (३)

धारि । भअवदि ! तुए अहिजणवदिं मालविअं अणाचक्खन्तीए असंपदं किदम् । (४)

परि । शान्तं पापम् । कारणेन खलु मया नैर्घृण्यमवलम्बितम् ।

(१) मालविका । किं नु खलु भर्ता साम्प्रतं भणति । स०

(२) परिभवोपहारिणः परिभवस्य दुःखस्य उपहारिणः उपकारकस्य दैवस्येति शेषः । अहो विनिपातः आगन्तुकोपस्थितिः ।

(३) देवीशब्दक्षमा देवीशब्दार्हा इयं मालविका प्रेष्यभावेन दासभावेन उपलक्षितेति शेषः । सती क्रियमाणा स्नानीयक्रियया गात्रप्रोञ्छनक्रियया पत्त्रोर्णं व धौतकौषेयमिव उपयुज्यते संबध्यते ।

(४) धारिणी । भगवति ! त्वयाभिजनवतीं मालविकामनाचक्षाणया असांप्रतं कृतम् । स० अभिजनवतीं प्रशस्तवंशजामित्यर्थः ।

धारि । किं विश्र तं कारणम् ? । (१)

परि । इयं पितरि जीवति केनापि देवयात्रागतेन शिवादेशकेन साधुना मत्समक्षं व्यादिष्टा । वत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यति । विदर्भगतमनुष्ठेय- [मुपस्थितमभूत् अ० ] मवधारितमस्माभिः । देवस्य तावदभिप्रायं श्रोतुमिच्छामीति । (२)

राजा । मौद्गल्य ! तत्रभवतोर्भ्रात्रोर्यज्ञसेनमाधवसेनयोर्द्वैराज्य(३)मिदानीमवस्थापयितुकामोऽस्मि !

तौ पृथग्वरदाकूले शिष्टामुत्तरदक्षिणे ।
नक्तं दिनं विभज्योभौ शीतोष्णकिरणाविव ॥ (४)

कञ्चु । देव ! एवममात्यपरिषदे विज्ञापयामि ।

---

(१) धारिणी । किमिव तत्कारणम् । स०

(२) देवयात्रायामागतेन शिवादेशकेन चिह्नादिद्वारा कुशलोपदेशकेन साधुना उदासीनेन संन्यासिना । भविष्यतीत्यन्तं धारिणीं प्रत्युक्त्वा राजानमुद्दिश्याह विदर्भगतमित्यादि ।

(३) द्वैराज्यं द्वौ राजानौ यत्र तस्य भावः विभक्तराज्यमित्यर्थः ।

(४) तौ यज्ञसेनमाधवसेनौ उभौ नक्तं दिनञ्च विभज्य शीतोष्णकिरणौ चन्द्रसूर्याविव उत्तरदक्षिणे वरदाकूले पृथक्, वरदानद्याः उत्तरं कूलं यज्ञसेनः, दक्षिणं वरदानदीकूलञ्च माधवसेनः शिष्टाम् पालयताम् तथा च वरदानदीं सीमाभूतां कृत्वा उत्तरदक्षिणे तयोः राज्यं विभक्तमस्त्वित्यर्थः ।

राजा। अङ्गुल्यानुमन्यते।

निष्क्रान्तः कञ्चुकी।

प्रथ। जनान्तिकम्। भट्टिदारिए! दिट्ठिआ भट्टिदारओ अद्धरज्जे पडिट्ठं गमिस्सदि। (१)

माल। एदं दाव बहुमणिदव्वं जं जीविदसंसआदो विमुत्तो। (२)

पुनः प्रविश्य कञ्चुकी।

विजयतां देवः। आमात्यो देवस्य विज्ञापयति कल्याणी देवस्य बुद्धिः। मन्त्रिपरिषदोऽप्येतदेव दर्शनम्। (३)

द्विधा विभक्तां श्रियमुद्वहन्तौ
धुरं रथाश्वाविव संगृहीतुः।
तौ स्थास्यतस्ते नृपते! निदेशे
परस्परावग्रहनिर्विकारौ॥ (४)

(१) प्रथमा। भर्तृदारिके! दिष्ट्या भर्तृदारिकोऽर्धराज्ये प्रतिष्ठां गमिष्यति। स०

(२) मालविका। एतत्तावद् बहु मन्तव्यं यत् जीवितसंशयाद्विमुक्तः। स०

(३) दर्शनं निश्चयः।

(४) हे नृपते! उक्तप्रकारेण द्विधा विभक्तां संगृहीतुः संयन्तुः धुरं रथाश्वाविव श्रियं वहन्तौ धारयन्तौ तौ यज्ञसेनमाधवसेनौ परस्परावग्रहे युद्धादिना आक्रमणे निर्विकारौ विघ्नरहितौ सन्तौ ते तव निदेशे आज्ञायां स्थास्यतः।

राजा। तेन हि मन्त्रिपरिषदं ब्रूहि सेनान्ये वीरसेनाय लेख्यतामेवं क्रियतामिति।

कञ्चु। यदाज्ञापयति देवः। इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य। अनुष्ठिता प्रभोराज्ञा। अयं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सोत्तरीयप्राभृतको (१) लेखः प्राप्तः। प्रत्यक्षीकरोत्वेनं देवः।

राजा। उत्थाय प्राभृतकं सोपचारं गृहीत्वा लेखं परिजनायार्पयति।

परिजनो लेखं नाट्येनोद्घाटयति।

धारि। अम्महे तदोमुहं एव्व णो हिअअम्। सुणिस्सं दाव गुरुअणाकुसलाणन्तरं वसुमित्तस्स वुत्तन्तम्। अदिभारे क्खु पुत्तओ सेणापदी णिउत्तो। (२)

राजा। उपविश्य वाचयति। स्वस्ति यज्ञशरणात्सेनापतिः पुष्पमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्यानुदर्शयति। विदितमस्तु। योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सराय निवर्त्तनीयो निरर्गलस्तुरङ्गमो विसर्जितः। स सिन्धोर्दक्षिणे रोधसि चरन्-

(१) उत्तरीयरूपं प्राभृतकं प्रावरणविशेषः सह तेन तथाभूतः लेखः लेख्यपत्त्रं प्राप्तः आगत इत्यर्थः।

(२) धारिणी। अहह तन्मुखमेव नो हृदयम्। श्रोष्यामि तावद्-गुरुजनकुशलानन्तरं वसुमित्रस्य वृत्तान्तम्। अतिभारे खलु पुत्रकः सेनापतिर्नियुक्तः। स०

श्वानीकेन यवनेन प्रार्थितः। (१) ततउभयोः सेनयोर्महानासीत् संमर्दः।

धारिणी विषादं नाटयति।

राजा। कथमीदृशं संवृत्तम्। पुनर्वाचयति।

ततः परान् पराजित्य वसुमित्रेण धन्विना।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्तितः॥ (२)

धारि। दूमिणा आस्ससिदं मे हिअअम्। (३)

राजा। लेखशेषं वाचयति। सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये। तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति।

राजा। अनुगृहीतोऽस्मि।

परि। दिष्ट्या पुत्रविजयेन दम्पती वर्धेते।

भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः॥ (४)

(१) अश्वानीकेन अश्वारोह एव अनीकं यस्य अश्वारोहिणेत्यर्थः। प्रार्थितः गृहीतः।

(२) ह्रियमाणः परैरिति शेषः। मे मम वाजिराजः अश्वश्रेष्ठः अश्वमेधीयत्वलक्षणाक्रान्तत्वात् श्रेष्ठत्वम् प्रसह्य बलेन निवर्त्तितः प्रत्याहृत इत्यर्थः।

(३) धारिणी। अनेनाश्वसितं मे हृदयम्। स० अनेन एतद्वाक्यश्रवणेन।

(४) भर्त्रासीति भर्त्रा स्वामिना अग्निमित्रेण वीरपत्नीनां वीरः

धारि । भोदि ! परितुट्ठह्मि जं पिदरं अणुजादओ वच्छओ । (१)

राजा । मौद्गल्य ! ननु कलभेन यूथपतेरनुकृतम् । (२)

कञ्चु ।

नैतावता वीरविजृम्भितेन
चित्तस्य नो विस्मयमादधाति ।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चे-
रग्नेरपां दग्धुरिवोरुजन्मा ॥ (३)

---

पतिर्यासां तासां श्लाघ्यानां स्त्रीणां धुरि अग्रे स्थापिताऽसि । तनयाद्धेतोः वीरसूरिति वीरमातेत्ययं शब्दः त्वामुपस्थितः प्राप्तः एतच्च धारिणीं प्रत्याह स्म ।

(१) धारिणी । भवति ! परितुष्टास्मि यत्पितरमनुजातको वत्सकः । स० पितरमनुजातकः वीर्य्येण पितृसदृशः जातो वत्सकः पुत्रकः वसुमित्रः ।

(२) कलभेन करिशावकेन अल्पवयस्केनेत्यर्थात् यूथपतेः प्रधानगजस्य चरितमिति शेषः । अनुकृतम् सदृशीकृतम् ।

(३) एतावता शत्रुपराजयपूर्व्वकाश्वाहरणरूपेण वीरविजृम्भितेन शूरचेष्टितेन नोऽस्माकं चित्तस्य विस्मयं न आदधाति अविस्मयाधायकत्वे हेतुमाह । अप्रधृष्यः अन्यैः धर्षयितुमशक्यः यस्य वीरस्य, अपां दग्धुरग्नेः वाड़वानलस्येव ऊरुजन्मा ऊरुतो जन्म यस्य स और्व्व ऋषिः अथ च उरु श्रेष्ठं जन्म यस्य तथाभूतः त्वञ्च प्रभवः उत्पत्तिकारणम् उत्पत्तिस्थानम् एतादृशोत्पत्तिकस्य वीरचेष्टितमुचितमेवेति न विस्मयाधायकत्वमिति भावः ।

राजा। मौद्गल्य! यज्ञसेनश्यालमुरीकृत्य (१) मुच्यन्तां सर्वे बन्धनस्थाः।

कञ्चु। यदाज्ञापयति देवः। इति निष्क्रान्तः।

धारि। जयसेणे! गच्छ मेलकप्पमुहीणाम् अन्तेउराणं पुत्तअस्स वुत्तन्तं णिवेदेहि। (२)

प्रतीहारी प्रस्थिता।

धारि। एहि दाव। (३)

प्रती। प्रतिनिवृत्य। इअह्मि। (४)

धारि। जनान्तिकम्। जं मए असोअदोहलणिओए मालविआए पडिस्सुदं तं, से अभिजणं च णिवेदिअ मम वअणेण इरावदिं अणुणेहि। तुए क्खु अअं संवादो ण भंसिदव्वो त्ति। (५)

प्रती। जं देवी आणवेदि। इति निष्क्रम्य पुनः प्रविश्य च।

(१) यज्ञसेनश्यालमुरीकृत्य गृहीत्वा तेन सहेत्यर्थः। तस्याभिनव-बद्धत्वात् पृथगुक्तिः।

(२) धारिणी। जयसेने! गच्छ मेलकप्रमुखीनामन्तःपुराणां पुत्र-कस्य वृत्तान्तं निवेदय। स०

(३) धारिणी। एहि तावत्। स०

(४) प्रतीहारी। इयमस्मि। स०

(५) धारिणी। यन्मयाशोकदोहदनियोगे मालविकायाः प्रतिश्रुतं तत्, तस्या अभिजनं च निवेद्य मम वचनेनेरावतीमनुनय। त्वया खल्वयं संवादो न भ्रंशितव्य इति। स० संवादः प्रस्तावः विषय इति यावत्।

भट्टिणि पुत्तविजयणिमित्तेण परितोसेण अन्तेउराणं आभरणाणं मञ्जूसिआ्ह्मि संवुत्ता। (१)

धारि। अलम्। किं अच्चरिअम्। साधारणो णं अब्भुदओ। (२)

प्रती। जनान्तिकम्। भट्टिणि! इरावदी विण्णवेदि। सरिसं क्खु पहुवीए पहुवन्तीए तव वअणम्। संकप्पिदे ण जुज्जदि अण्णहा कादुं त्ति। (३)

धारि। भअवदि! तुए अणुमदं इच्छामि अज्जसुमदिणा पढमं किदम् अज्जउत्तस्स मालविअम् उववादेदुम्। (४)

परि। इदानीमपि त्वमस्याः प्रभवसि।

धारि। मालविकां हस्ते गृहीत्वा। इमं अज्जउत्तो पिअणिवेदणाणुरूवं पारितोसिअं पडीच्छदु। (५)

---

(१) प्रतीहारी। यद्देव्याज्ञापयति। भट्टिनि! पुत्रविजयनिमित्तेन परितोषेणान्तःपुराणाम् आभरणानां मञ्जूषिकास्मि संवृत्ता। स०

(२) धारिणी। अलम्। किमाश्चर्य्यम्। साधारणो नन्वभ्युदयः। स०

(३) प्रतीहारी। भट्टिनि! इरावती विज्ञापयति। सदृशं खलु पृथिव्याः प्रभवन्त्यास्तव वचनम्। सङ्कल्पिते न युज्यतेऽन्यथा कर्त्तुमिति। स० पृथिव्या इव गुर्व्या इति शेषः।

(४) धारिणी। भगवति! त्वयानुमतमिच्छाम्यार्य्यसुमतिना प्रथमं कृतामार्य्यपुत्रस्य मालविकामुपपादयितुम्। स० कृताम् आर्य्यपुत्रस्य स्वत्वास्पदीभूतां कृतां दत्तामित्यर्थः। उपपादयितुं दातुम्।

(५) धारिणी। इमामार्य्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु।

राजा व्रीडां नाटयति ।

धारि । सस्मितम् । किं अवधारेदि अज्जउत्तो । (१)

विदू । भोदि ! अत्थि क्खु लोअप्पवादो सव्वो जणो णव्ववरो लज्जादुरो [ लुओ ] होदित्ति । (२)

राजा विदूषकमवेक्षते ।

विदू । अह देवीए एव किदप्पणिव्विसेसं दिण्णदेवीसद्दं मालविअम् अत्तभवं पडिगहिदुम् इच्छदि । (३)

धारि । एदाए अ राअदारिआए अहिजणेण दिण्णो एव्व देवीसद्दो । किं पुणरुत्तेण । (४)

परि । मामैवम्

अस्माकमुत्सवमणिर्मणिजातिपुरस्कृतः ।
जातरूपेण कल्याणि ! तर्हि संयोगमर्हति ॥ (५)

---

(१) धारिणी । किमवधारयत्यार्यपुत्रः । स०

(२) विदूषकः । भवति ! अस्ति खलु लोकप्रवादः सर्व्वो जनो नव्यो वरो लज्जातु[लुको]रो भवतीति । स०

(३) विदूषकः । अथ देव्या एव कृतात्मनिर्विशेषां दत्तदेवीसंज्ञां मालविकामत्रभवान् प्रतिग्रहीतुमिच्छति । स०

(४) धारिणी । एतस्याश्च राजदारिकाया अभिजनेन एव दत्तः देवीशब्दः । किं पुनरुक्तेन । स०

(५) हे कल्याणि ! यद्यपीति शेषः । इयं मालविका अस्माकमुत्सवमणिः उत्सववर्द्धकमणिरिव मणिरूपेण जात्या पुरस्कृतः आभिजात्येन शोभितः तर्हि तथापि जातरूपेण स्वर्णेन संयोगमर्हति तथा च मणेरपि

धारि। मरिसेदु भअवदी, अब्भुदअकहाए पढ़मं अवगुण्ठिदं वसणं णालक्खिदम्। जअसेणे! गच्छ दाव कोसेअं पत्तोण्णं उवणेहि। (१)

प्रती। जं भट्टिणी आणावेदि। इति निष्क्रम्य पत्त्रोर्णं गृहीत्वा प्रविश्य। देवि! एदम्। (२)

धारि। मालविकामवगुण्ठनवतीं कृत्वा। अज्जउत्त! इअं पडिच्छीअदु। (३)

राजा। त्वच्छासनं प्रत्यनुरक्ता वयम्। अपवार्य। हन्त प्रतिगृहीतम्। (४)

विदू। अम्हे देवीए अणुऊलदा धारिणीए। (५) इति परिजनमवलोकयति।

परिजनः। मालविकामुपेत्य। जेदु जेदु भट्टिणी। (६)

---

स्वर्णसंयोगादेव शोभा नान्यथा तथा एतस्या आभिजात्येऽपि अग्निमित्ररूपस्वर्णसंयोगादेव शोभा नान्यथेत्यर्थः।

(१) धारिणी। मर्षयतु भगवती, अभ्युदयकथया प्रथमम् अवगुण्ठनं वसनं नालक्षितम्। जयसेने! गच्छ तावत्कौषेयं पत्त्रोर्णमुपनय। स०

(२) प्रतीहारी। यद्भट्टिन्याज्ञापयति। देवि! एतत् स०।

(३) धारिणी। आर्यपुत्र! इयम् प्रतीष्यताम्। स० प्रतिगृह्यताम्।

(४) हन्त प्रतिगृहीतं तद्दानात् प्रागेव स्वीकृतमित्यर्थः।

(५) विदूषकः। अहह देव्या अनुकूलता धारिण्याः। स०

(६) परिजनः। जयति जयति भट्टिनी। स०

धारिणी परिव्राजिकां निर्वर्णयति ।

परि । देवि ! नैतच्चित्रं त्वयि ।

प्रतिपक्षेणापि पतिं सेवन्ते भर्तृ[वत्सलास्तन्व्यः]सेवनानार्य्यः ।

अन्यसरितामपि जलं [रसं] समुद्रगाः प्रापयन्त्युदधिम् ॥ (१)

प्रविश्य निपुणिका ।

निपु । जेदु जेदु भट्टा । इरावदी विण्णवेदि । जं हि उवआरादिक्कमेण तदा अहं भट्टिणो अवरात्धा । णं सो अत्तणो भट्टा । अणुपदं भट्टिणो अणुरूवं एव्व मए आअरिअं । सम्पदं पुण्णमणोरहो भट्टा जाओ । अहं संपसादमेत्तेण संभावइदव्वेत्ति । (२)

---

(१) भर्तृसेवनाः स्वाम्याराधनतत्पराः नार्य्यः पाठान्तरे भर्तृवत्सला स्वाम्यनुरक्ताः तन्व्यः प्रतिपक्षेणापि सहार्थे तृतीया। प्रतिपक्षस्त्रिया सहापि पतिं सेवन्ते तत्र दृष्टान्तः समुद्रगाः नद्यः अन्यसरिताम् अपरनदीनां रसं जलं क्वचित् जलमित्येव पाठः उदधिं समुद्रं प्रापयन्ति ।

(२) निपुणिका । जयति जयति भर्ता । इरावती विज्ञापयति । यद्धि उपचारातिक्रमेण तदाहं भर्तुरपराद्धा । ननु स आत्मनो भर्ता । अनुपदं भर्तुरनुरूपमेव मया आचरितम् । साम्प्रतं पूर्णमनोरथो भर्ता जातः । अहं प्रसादमात्रेण सम्भावयितव्येति । स० । ननु भो स भर्ता आत्मन इति क्वचित्पाठस्तत्रार्थः ।

आशास्यमीतिविगमप्रभृति प्रजानां
सम्पत्स्यते न खलु गोप्तरि नाग्निमित्रे ॥ (१)

इति निष्क्रान्ताः सर्वे।

इति पञ्चमोऽङ्कः ।

इति श्रीमहाकवि-कालिदासप्रणीतमग्निमित्रं नाम नाटकं समाप्तम् ।

---

(१) हे चण्डि ! हे कोपने ! देवि ! इति पाठस्तु समीचीनः कृताभिषेकायाः क्रोधराहित्यौचित्यात् प्रसादसुमुखी भव प्रसन्ना भव यदा यदा किञ्चित् कारणमुद्दिश्य कुप्यसि तदा तदा मम प्रसादनात् प्रसन्ना भव न तु इरावतीव अत्यन्तकोपना भवेत्यर्थात् । अग्निमित्रे मयि गोप्तरि सति प्रजानाम् आशास्यम् वाञ्छनीयं ईतिविगमप्रभृति अतिवृष्ट्यादिराहित्यादि न खलु सम्पत्स्यते इति न अपि तु सम्पत्स्यते एव। अतस्तस्य स्वतः सिद्ध-त्वात्प्रार्थनासापेक्षेति भावः ।

क कालिदासवचनं भावगम्भीरमद्भुतम् ।
क मे मन्दा मतिस्तस्य व्याख्याने सा क्षमा कुतः ॥
गुरुं चित्ते निधायैव किञ्चिदुक्तं मयात्र यत् ।
सदोषमपि तद्भूष्यं विद्वद्भिः सत्स्वभावतः ॥ ओं तत्सत् ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यकृता मालविकाग्निमित्रविवृतिः समाप्ता ।

शाके नेत्राङ्कशाङ्केन्दुप्रमिते वत्सरे श्रिया
तारानाथद्विजेनेदं संस्कृत्य मुद्रयाङ्कितम् ।
१७९२ ।

धारि। णिउणिए! अवस्सं दे सेविअं अज्जउत्तो जाणिस्सदि। (१)

निपु। अणुगिहीदह्मि। (२) इति निष्क्रान्ता।

परि। देव! अमुकत्वत्सम्बन्धेन चरितार्थं माधवसेनं त्वदाज्ञया दृष्ट्वा नयनसाफल्यं कर्तुमिच्छामि।

धारि। ण जुत्तं भअवदि! अह्माणं परिच्चत्तुम्। (३)

राजा। भगवति मदीयेष्वेव लेखेषु तत्रभवतस्तामुद्दिश्य सभाजनानि यातयिष्यामः।

परि। युवयोः स्नेहात्परवानयं जनः।

धारि। आणवेदु अज्जउत्तो भूओवि दे किं पिअम् उवअरिस्सम्। (४)

राजा। मम तावदेतावदेव प्रियम्।

त्वं मे प्रसादसुमुखी भव चण्डि! [देवि!] नित्य
मेतावदेव मृगये प्रतिपक्षहेतोः।

---

(१) धारिणी। निपुणिके! अवश्यं ते सेवितमार्यपुत्रो ज्ञास्यतीति। स० ते तव सेवितं सेवनमार्य्यपुत्रो ज्ञास्यति यथा त्वया सेवितं तदनुरूपं फलमार्य्यपुत्रो दास्यतीत्यर्थः। इति इरावत्यै कथयितव्यम्।

(२) निपुणिका। अनुगृहीतास्मि। स०

(३) धारिणी। न युक्तं भगवति! अस्मान् परित्यक्तुम्। स०

(४) धारिणी। आज्ञापयत्वार्यपुत्रः। भूयोऽपि ते किं प्रियमुपकरिष्यामि।